तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ।
सुप्रीतो भगवान्ब्रह्मा प्रजानां पतिरीश्वरः ॥ १३
ततः सुरगणैः सार्धमुपागम्य पितामहः ।
भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ १४
भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥ १५
तमुवाच महातेजाः सर्वलोकपितामहम् ।
भगीरथो महाभागः कृताञ्जलिरवस्थितः ॥ १६
यदि मे भगवान्प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ १७
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ १८
देया च संततिर्देव नावसीदेत्कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ १९ G. I. 44. 18 B. I. 42. 20 L. I. 39. 21

13 T2 moth-eaten up to घोरे in $^{b}$.—$^{a}$) D3 तपस्य (sic) (for तस्य). Ś1 D3.5.7.11.12 -सहस्रेण; Ñ2 V B D1.10.13 M4 -सहस्रांते (for -सहस्राणि).—$^{b}$) Ś1 D5.11.12 तपस्युग्रे महात्मनः; Ñ2 V B D1–3.7.10.13 M3 तपसो (V4 °..) ग्रेण तोषितः.—After 13$^{ab}$, Ś1 (m) Dt D4.6.8.9.14 S (except M4) Cr.m.g.t ins.:

899* अतीतानि महाबाहो तस्य राज्ञो महात्मनः ।

—$^{c}$) Cv.r.m.g.t सुप्रीतो (as in text). Ś1 D5.11.12 ब्रह्मा (D12 वर) प्रीतोभवद्राम; Ñ2 V B D1–3.7.10.13 M4 आजगामाश्रमं ब्रह्मा (D2.3.7 °ममथो).—$^{d}$) D1 ब्रुवाणः; D12 प्रजा*; M4 चराणां (for प्रजानां) Ś1 Ñ2 V B Dt D1.5.6.8.10–12 G1.3 M2.4 प्रभुर् (for पतिर्). D2.3.7.9 ब्रह्मा (D9 सर्व)लोकपितामहः; Ck as in text (for $^{d}$).

14 Dt reads 14 twice.—$^{a}$) Ñ2 V B D1–3.7.9–11.13 M4 वृतः; Cg as in text (for ततः) Ś1 V2.4 D1–3 (D3 om.).5.7.9.11.12 सर्वैः; Ñ2 V1.3 B D10.13 M4 श्रीमान् (for सार्धम्).—$^{b}$) Ś1 D5.11.12 सह लोक- (D11 °के), M1 उप° (for उपागम्य). Ñ2 V1.3 B D1–3.7.9.10.13 M4 विमानवरमास्थि (D1 °श्रि)तः (D7 °तैः); V2 श्रीमानंबरमास्थितः; V4 श्रीमान्स्यंदनमास्थितः.—$^{cd}$) Ñ2 V B D1–3.7.9.10.13 M4 स एन (Ñ2 V D9.10 °व)माभाष्य (M4 °साद्य) तदा (D3 illeg. for ष्य तदा) (for $^{c}$). D3 illeg., D7.9 दीप्यमानं (for तप्यमानम्). Ś1 D5.11.12 तप्यमानं महात्मानं (by transp.). Ś1 D1.5.11.12 वचो; Ñ2 त[illegible] V1.2.4 B2.3 D3.7.9.10 M4 ततो; V3 B1.4 D2.13 तपो; G1.3 [illegible] तदा; Cg as in text (for अथ).

15 $^{a}$) Dt D6.8 °राज; D4 T3 G1.3 M2.3 (after corr. *sec. m.* °राजः) °तेजः; M4 °बाहो (for महाभाग).—$^{b}$) Ś1 Ñ2 V1–3 B D1.3.7.9.12.13 नरे°; V4 सुरे°; Dt D2.4.6.8.11 T3 जना (D2.11 नरा)धिप; D5.10 नरोत्तम (for जनेश्वर). M4 भगीरथ महारथ.—$^{c}$) Ś1 D5.11.12 त्वं (for च). Cm.t तपसा च (as in text). D11 सुतवरं (for सुतप्तेन).—$^{d}$) D11 दांते (sic) (for वरं).—For 15$^{cd}$, Ñ2 V B D1–3.7.9.10.13 M4 subst.:

900* गृहाण वरमस्मत्तः काङ्क्षितं पृथिवीपते ।

[V4 B1 त्वं (V4 om. [submetric]) वर मत्तः (for वरमस्मत्तः). D7 वर गृहाण मत्तस्त्वं (for the prior half). D13 वांछित (for काङ्क्षितं).]

16 $^{a}$) Ñ2 V B D1–3.7.10.11.13 M4 न[illegible] दृष्ट्वा (B1 D11 M4 राजा); Cg as in text (for महातेजाः). Ś1 D5.12 उवाच सु (D12 स)महात्मानं.—$^{b}$) Ñ2 V B D1–3.7.10.11.13 M1 ब्रह्माण स्वयमागतं.—$^{c}$) Ś1 Ñ2 V B D1–3.5.7.10–12 T3 G1 M2–4 °तेजाः; Dt D6.8 °बाहुः; D13 नरश्रेष्ठ (for महाभागः).—$^{d}$) Ñ2 V B D1.10.11.13 M4 इदं वचः; D2.3.7 अभाषत; D4.9 T3 उप° (for अवस्थितः). Ś1 D5.12 G1.3 M2 बध्वा शिरसि चांजलिं; Dt D6.8 कृतांजलिपुटः स्थितः.—After 16, B3 ins.:

901* उवाच नृपशार्दूल भक्त्या च नतकन्धरः ।

17 $^{a}$) Ś1 मां; B4 ते (for मे). V2 D2.5.6.9.11.12.14 T3 G1 M2.3 Cm °वन् (for भगवान्).—$^{b}$) Ñ2 V2–4 B D10.13 बलं; V1 बलः (sic) (for फलम्).—$^{c}$) Ñ2 V B D1–3.7.10.13 M4 ततः (D13 हताः) सगरपुत्रास्ते (V2 °स्तु).—$^{d}$) D13 सगरम् (for सलिलम्). D9 आप्नुयात् (sic). Ck cites $^{d}$ as in text.

18 D9 om. 18.—$^{a}$) Ck cites $^{a}$ as in text.—For 18$^{ab}$, Ś1 D5.12 subst.:

902* गङ्गासलिलसंक्लिन्ने ते भस्मनि महौजसः ।;

Ñ2 V B D1–3.7.10.11.13 M4 subst.:

903* गङ्गाजलप्लुते तस्मिन्देहभस्मनि पाविताः ।

[V4 °प्लुतं (sic), D3 °*ते; D7 -*ल°; D13 M4 -जला° (for -जलप्लुते). D2.3.7 दे (D3 *)शे; M4 देहे (for तस्मिन्). V2 B1 D13 देहे; M4 तस्मिन् (for देह-). V2 पातिताः; D13 चानघ (for पाविताः). D1–3.7 तस्मिन्भ (D1 देशे भ)स्मनि प्ला (D3.7 पा)विते (for the post. half).]

—$^{c}$) T3 M2.3 (after corr. *sec. m.*) °र्थं; Cg as in text (for अत्यन्तं). Ñ2 V B D1–3.7.10.11.13 M4 गच्छेयुरमलाः (V4 °राः) स्वर्गं (B4 सर्वं [sic]); Cm.t as in text (for $^{c}$).—M2 om. 18$^{d}$–20$^{c}$.—$^{d}$) Ś1 D1–3.7 M3.4 ते; Ñ2 V B D10.11.13 नः; Dt D6.8 च (for मे).

19 M2 om. 19 (cf. v.l. 18).—$^{a}$) Ś1 Ñ2 V B D1–3.5.7.9–13 इयं; M4 परा; Cm.g.t as in text (for देया). D2 मे; D14 m.; Cg as in text (for च). Dt D6.8 देव याचे ह (D6 °हं) संतत्यै.—$^{b}$) Ś1 D5.12 नावसानं कदाचन; Ñ2 V B2–4 D10.13 नावसादं (V4 °मानं) कथंचन; B1

I. 44. 19 I. 42. 21 I. 39. 22 उक्तवाक्यं तु राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २०
मनोरथो महानेष भगीरथ महारथ ।
एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥ २१
इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता ।
तां वै धारयितुं राजन्हरस्तत्र नियुज्यताम् ॥ २२
गङ्गायाः पतनं राजन्पृथिवी न सहिष्यते ।
तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥ २३
तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ।
जगाम त्रिदिवं देवः सह सर्वैर्मरुद्गणैः ॥ २४

## इति श्रीरामायणे बालकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

नावसीदेत्कथंचन; D1–3.7.9 11 M4 नोच्छिद्येत कथं( D1 11 M4 °दा )चन. ꙮ Cm g.t यथा( Ct यथा ) नः कुलं नावसीदेद् ।ꙮ —$^{c}$) G4 ऐक्ष्वाकूणां. B1 कुलं ( for कुले ). Ś1 Ñ2 V B D5 10 12 13 गच्छेद् ( for देव ). D1–3.7.9.11 इक्ष्वाकुराज( D9 °वंश )प्रभवा. —$^{d}$) Ś1 V1.3 B4 वरो वरः; Ñ2 V4 B3 D10 13 [अ]परो वरः; V2 B1 वरोपरः; B2 Ck परो वरः ( by transp.), D12 वचो मम ( for वरः परः ). D1–3 7.9 11 M4 वरमेन( D1.11 M4 °तं; D9 °कं ) वृणोम्यहं( D2 °तोस्म्यहं; M4 °णोमि ते ); D5 एष तेस्तु वरो मम.

20 M2 om. $20^{abc}$ ( cf. v.l. 18 ). Ś1 repeats $20^{ab}$ in marg. —$^{a}$) Cg उक्त- ( as in text ). Ñ2 V B D1–3 7. 9–11 13 M4 इत्युक्त( B3 D2.3 °क्त्वा; B4 °क्तं [ sic ] )वाक्यं ( V4 D9 °वंतं ) ( for उक्तवाक्यं तु ). —$^{c}$) V3 इत्युवाच. Cg शुभां ( as in text ). D1–3.7 9.11 M4 तदा( M4 °तो ) राम ( for शुभां वाणीं ). —$^{d}$) Cg मधुरां ( as in text ). D4 reads मधुरा in मधुराक्षराम् in marg. Ś1 Ñ2 V B D5.10.12.13 मधुराक्षरभूषितां( V2 °संमितां; B4 °विभूषितां [ hypermetric ] ), D1–3.7.9.11 M4 वाक्यं श्रुति( D11 सुत )सुखावहं; M2 मधुरं मधुराक्षरं.

21 $^{a}$) T3 महा°; Cg.k.t as in text ( for मनोरथो ). D4 T3 °राज; G1 M2 °तेजा( G1 °जो [ sic ] ); G3 °भाग ( for महानेष ). Ś1 Ñ2 V B D1–3 5.7 9–13 तपोधन महाभाग. —$^{b}$) V3 °मनाः; D11 °बलं ( sic ) ( for महारथ ). —Note hiatus between $^{c}$ and $^{d}$. —$^{c}$) Ñ2 V B D10.13 M4 [अ]विच्छिन्नम्; D5 °व; D12 °च( for भद्रं ते ). —$^{d}$) Ś1 -कुलनंदन; Ñ2 B3 D10.13 -कुलसंभवं( D13 °व ); V B1.2 4 D1–3.5.7 9.11 12 G1.3 M4 -कु( B1 * )लमव्ययं ( for -कुलवर्धन ). —After 21, B4 ins. 904*.

22 $^{ab}$) Cv.r.m. cite $^{a}$ as in text. Dt D6.8 transp. गंगा and ज्येष्ठा. —For $22^{ab}$, Ś1 D1–3.5.7.9.11 12 subst., while B2 ins. after 905*, whereas B4 ins. after 21 :

904* या सा देवनदी गङ्गा ज्येष्ठा हिमवतः सुता ।
[ B4 श्रेष्ठा ( for ज्ये° ). ]

—For $22^{ab}$, Ñ2 V B ( B4 reads after 904* ) D10.13 subst. :

905* इयं तु गङ्गा सरितां प्रवरा स्वर्गतश्च्युता ।
[ Ñ2 V4 B3 च ( for तु ). V4 प्रवरा सरितां ( by transp. ). ]

—Thereafter Ñ2 V B ( B2 after 904* ) D10 13 cont. :

906* दारयेत्पृथिवीं कृत्स्नां निपतन्ती महौघिनी ।
[ D13 सर्वां ( for कृत्स्नां ) B1 निष्पतती. ]

—$^{c}$) D2 तु ( for वै ). M3 Cg शक्तो ( for राजन् ). Ñ2 V B D10.13 तदस्या धारणे राजन्. —$^{d}$) T2 रहस् ( metathesis ); M3 ( before corr. as in text, after corr. *inf lin. sec. m.* ) नरस्; M4 शिवस् ( for हरस् ). M4 प्रयुज्यतां. Ś1 Ñ2 V B D1–3.5.7 9–13 शिवो( D13 महा )देवः प्रसाद्य( B4 °सेव्य )तां; Cv.r m.g as in text ( for $^{d}$ ).

23 $^{a}$) D12 तरणं ( for पतनं ). Ñ2 V B D1–3 7 10 11.13 व्यक्तं ( for राजन् ).—$^{b}$) Cg पृथिवी( as in text). T2 स नहिष्यते ( metathesis ), G1.3 4 Cm °ति ( for न सहिष्यते ). Ś1 Ñ2 V B D1–3 5 7.9–13 भूमिः सोढुं न शक्ष्यति ( V3 B4 °क्ष्यति [ sic ]; V4 °क्ष्यते; D3 °शशवंक्ष्यति [ sic ] ). —After $23^{ab}$, Ś1 D1–3.5.7 9 11.12 ins. :

907* अतिवेगात्पतन्ती गां भित्त्वा पातालमाविशेत् ।

—$^{c}$) D6 om. वै ( submetric ). Cm g धारयितुं( as in text ). Dt D4.6.8 T3 राजन् ( for वीर ) Ś1 Ñ2 V B D1–3.5 7.9–13 तस्या( V3 °स्माद् ) धारयितारं च. —$^{d}$) Ś1 Ñ2 V B D1–3.5.7.9–13 शंकरात् ( for शूलिनः ). —For 23, M4 subst. :

908* दारयेत्पृथिवीं कृत्स्नां पतम[ती] महोर्मिका ।
तदस्या धारणे देवं शिवं तावत्प्रसादय ।
गगनात्प्रच्युतां राजन्स एनां धारयिष्यति ।
नान्यस्तस्माच्छिवादस्याः शक्तो वेगं हि दुःसहम् ।
सोढुं निपतमानायास्तस्मात्त्वं प्रसादय । [5]

[ For the prior half of l. 1 cf. that of 906*. ]

—After 23, Ñ2 V B D10.13 ins. :

909* वेगं सुदुःसहं लोके तस्मात्त्वं प्रसादय ।

[ V4 लोकस् ( sic ). —For the post. half cf. that of l. 5 of 908*. V1.3 B1.4 त्वं तं ( by transp. ); V4 तं * ( for त त्वं ). ]

24 $^{a}$) M4 स ( for तम् ). V3 राजर्षि ( for राजानं ). —$^{b}$) Ś1 M2 आभाष्य; D12 चाभ्य* ( for चाभाष्य ).

# ४२

देवदेवे गते तस्मिन्सोऽङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा वसुमतीं राम संवत्सरमुपासत ॥ १
अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥ २
प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ३

G. I. 45. 4
B. I. 43. 3
L. I. 40. 4

Ñ2 V B D10 13 M4 भगवा( M4 °व )न्प्र( V4 °वांस्तु )पितामहः. —After 24^ab, Ś1 ins 912*, while D1 ( m. ) ins.·

910* गच्छ देवि धरापृष्ठं भगीरथशुभेच्छया ।
इत्युक्त्वा प्रययौ ब्रह्मा सर्वदेवनमस्कृतः ।

—Ś1 reads 24^cd in marg. —^c ) Ś1 Dt D6 8 M2 देवैः ( for देवः ). —^d ) Cm k.t देवैर् ( for सर्वैर् ). Ś1 Dt D6 8 M2 सर्वैः सह ( by transp. ). Cm g k.t मरुद्गणैः ( as in text ). —For 24^cd, Ñ2 V B D10 13 subst..

911* आभाष्य च महीं गन्तुं गङ्गां स त्रिदिवं ययौ ।

[ B4 om. च ( submetric ). B2 reads ( after corr. ) from हीं up to त्रि in marg Ñ2 V3 B1 3 4 D10 13 नेतुं ( for गन्तु ). V2.4 transp. गंतु and गगा V1 दित्रिव ( metathesis ) ( for त्रिदिव ). ]

On the other hand, D1–3.5 7 11 12 M4 subst., while Ś1 ins. after 24^ab·

912* नियुज्य जगतीं गन्तुं गङ्गां प्रतिययौ ततः ।
पुराणं देवसदनं सर्वदेवनमस्कृतः ।

[ ( l. 1 ) Ś1 D3 5 11 12 नियुक्ता( D5 °युक्ता [ sic ] ), D1 °योक्तु, D7 °क्त्वा ( for नियुज्य ). M4 च मही ( for जगती ). M4 पुनः ( for तत· ). —M4 om. l. 2. —( l 2 ) D1–3.7 11 पौ ( D11 पु )राण ब्रह्मसदनं ( for the prior half ). D5 -नमस्कृत ( for -नमस्कृतः ). ]

Colophon D1–3.5.7.12 om. ( Sarga cont. ). —*Kānda name* : Ś1 Ñ2 V1 4 D4 om. V2 3 B D10 11 आदि°. —*Sarga name* : Ñ2 भगीरथप्रसादं; V1 2 4 B D10.11 भगीरथ( D11 om. )वरप्रदानं( D10 [illegible] ); V3 भगीरथवरप्रसादनं; D9 गंगावतरणं. —*Sarga no.* ( figures, words or both ) : V1 4 B1.4 D11 om. Ś1 Dt D4.6.8 14 S 42, Ñ2 B2 3 D10 44, V2 46, V3 43, D9 45. D13 —कांडे—रथ—प्रदानं सर्गः 44. —After colophon, T2 concludes with श्रीरामचन्द्राय नमः; G1.2.4 M1.2 श्रीरामाय नमः; G3 श्रीमते रामानुजाय नमः.

## 42

☞ Ñ1 missing Sarga 42 ( cf. v.l. 1. 33.8 ).

**1** Before 1, D13 ins. सूत उवाच —^a ) Ñ2 V B D10.13 प्रजापतौ; Cm g.k.t as in text ( for देवदेवे ). D2.14 गतो ( sic ) ( for गते ). Ś1 D1–3.5 7.9.11.12 राम; M4 राजा ( for तस्मिन् ). —^b ) Ñ2 V B D10.13 M4 अंगुष्ठाग्र- ( for सोऽङ्गुष्ठाग्र- ). Ñ2 V3 B3 D10.13 -प्रपीडितं; V1.2.4 B1.2.4 D11 G4 M4 -निपीडितं( D11 G4 °तः ) ( for -निपीडिताम् ). Ś1 D5 12 सोंगुष्ठाग्रेण पीडितां. —^c ) Ñ2 V B D10.13 M4 महीतलं ( for वसुमतीं ). Ś1 Ñ2 V B D1–3 5 7 9–13 राजा ( for राम ). —^d ) Ś1 Ñ2 V B D1–3 5 7 9–13 उपाविशत् ( Ś1 °गतम् ; V1 D1 3 7 9 °विशत् ; D2 °वसन् ), M4 अतिष्ठत; Cm.g as in text ( for उपासत ) D4 6 8 T1 वत्सरं समुपास्मत; M3 समुपास्त समा नृप·. ❀ Ct समुपास्मेत्यार्षं बहुवचनम् समुपास्तेत्यर्थः । ❀ —After 1, Ś1 ( m ) Ñ2 V B D10.11.13.14 T1 2 G M ( M3 *inf. lin. sec. m.* ) ins. :

913* ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः ।
अचलः स्थाणुवत्स्थित्वा रात्रिंदिवमतन्द्रित· ।

[ M3 transp. l. 1 and 2. —( l. 1 ) B1 2 अना° ( for निरालम्बो ). Ś1 B1 2 °भक्ष्यो ( for वायुभक्षो ). M2 निराशनः; M4 [ऽ]नपाश्रयः ( for निराश्रय· ). —( l. 2 ) V1 3 B1.4 D11.13.14 T1 2 G M अचल-. Ś1 नित्य ( for स्थित्वा ). M3 दिवारात्रम् ( for रात्रिंदिवम् ). Ś1 उपागत , Ñ2 V1 अनन्वित·; D14 T1.2 G1 2.4 M1–3 अरिंदम. ( T1 G2 4 M1 3 °म; T2 °म [ sic ] ), M4 अयापयत् ( for अतन्द्रित· ) ]

**2** V1 om. 2^ab. —^a ) Ñ2 B3 D10.13 [ऽ]तीते ( for पूर्णे ). —^b ) Ś1 Ñ2 V2–4 B D1–3.5 7 9–13 सर्वदेव- ( for सर्वलोक- ). M4 सर्वभूतपतिः शिवः. —^d ) Ñ2 V B D10.13 M4 भगीरथमभाषत.

**3** ^b ) Ñ2 V2–4 B D10 13 प्रियं महत् ; V1 प्रियं तव ( by transp. ) ( for तव प्रियम् ). —^c ) Ñ2 V1–3 B D10.11.13 पतंतीं; V4 निपतंतीं ( hypermetric ); Cg as in text ( for शिरसा ). D9 धारयिष्येहं. M4 धारयिष्यामि शिरसा ( by transp. ). —^d ) D4 -ज्येष्ठ- ( for -राज- ). D11 महत् ( sic ) ( for अहम् ). Ñ2 V B D10.13 दिवस्त्रि( V3 दिवात्रि [ sic ]; B2 देवीं त्रि )पथगां नदीं ( V4 °गामिनीं ); M4 पतंतीं गगनान्नदीं. —After 3, Ñ2 V B D10.13 M4 ins. ; Ś1 D1–3.5.7.9.11.12 ins. after 4^ab .

914* ततो हिमवतः शृङ्गमधिरुह्य महेश्वरः ।
निपतेत्यब्रवीद्गङ्गामाभाष्याकाशगां तदा ।
जटाकलापं विपुलं विनिकीर्य समन्ततः ।
बहुयोजनविस्तारं शैलकन्दरसंनिभम् ।

[ ( l. 1 ) Ś1 D2.3.5 7.9.12 त( D9 ग )तः स हिमवंतं तं ( D2 सम्- ), D11 तत· स हिमवत्तीरम् ( for the prior half ). Ś1 अभिरुह्य. —( l. 2 ) Ś1 D2 3.5 7.9.12 M4 पतस्व; D11 प्रपत ( for निपत ). D1 पत त्वमित्यब्रवीद्गगां ( hypermetric ) ( for the prior half ). B4 नदी ( for तदा ). —( l. 3 ) Ś1 D1–3.5.7.9.11.12 M4

I. 45. 7
I. 43. 4
I. 40. 7
ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ।
तदा सातिमहद्रूपं कृत्वा वेगं च दुःसहम् ।
आकाशादपतद्राम शिवे शिवशिरस्युत ॥ ४
नैव सा निर्गमं लेभे जटामण्डलमोहिता ।
तत्रैवाबभ्रमद्देवी संवत्सरगणान्बहून् ॥ ५

अनेन तोषितश्चासीदत्यर्थं रघुनन्दन ।
विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥ ६
गगनाच्छंकरशिरस्ततो धरणिमागता ।
व्यसर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् ॥ ७

प्रवि( D11 M4 विप्र )कीर्य, V3 विकीर्य स ( for विनिकीर्य ). —( l. 4 ) V4 पच- ( for वहु- ). B1 बहुगो जलसंभार ( for the prior half ). V1 -कुञर- ( for -कन्दर- ). B4 -शोभित ( for -सन्निभम् ) ]

On the other hand, M3( *inf. lin. sec m.* ) ins. after 3

915* उमापतेर्वचः श्रुत्वा गङ्गा क्रोधसमन्विता ।

4 For subst. see 7. —$^{a}$ ) G2 M3 श्रेष्ठा ( for ज्येष्ठा ). Ś1 D1–3.5 7 9 11 12 ततो हैमव( D2 °ञ [ sic ] )तीं ज्येष्ठां. —$^{b}$ ) Ś1 D1–3 5 7 9 11.12 -नमस्कृतां. —After $4^{ab}$, Ś1 D1–3 5 7.9.11 12 ins. 914*. —$^{c}$ ) G1 सातिभयं रूपं; G3 सा सुम° ( for सातिमहद्रूपं ). —$^{e}$ ) D4 T3 M2.3 गंगा ( for राम ). —$^{f}$ ) T3 [ अ ]थ; Cg k as in text ( for [ उ ]त ). —After 4, Dt D4 6.8.14 S ( except M4 ) all Cs ins.

916* अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ।
विशाम्यहं हि पातालं स्रोतसा गृह्य शंकरम् ।
तस्यावलेपनं ज्ञात्वा क्रुद्धस्तु भगवान्हरः ।
तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा ।
सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि । [ 5 ]
हिमवत्प्रतिमे राम जटामण्डलगह्वरे ।
सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ।

[ ( l. 1 ). —For ins. see below. —( l. 4 ) D14 T1.2 G1.3 4 M2 3 त्रिणयनस्. T3 G2 M1 तथा ( for तदा ). —( l. 5 ) D14 परिता ( sic ) ( for पतिता ). G2 रौद्रस्य. —( l. 6 ) G4 रम्ये ( for राम ). ]

—M3 ins. l. 1 and 2 after l. 1 and 3 of 916* respy. :

917* मौढ्यान्महेश्वरं देवं सर्वभूतनमस्कृतम् ।
शितिकण्ठो महानस्या मोक्षयिष्येऽवलेपनम् ।

5 Cf. v.l. 4 and 7. —$^{b}$ ) Dt D8 जटामंडलमंततः; Cg °मोहिता( as in text ). —$^{c}$ ) G1 3 सा; Ck.t as in text ( for [ ए ]व ). D4 T3 G1 [ अ ]बिभ्रमद्; G4 illeg.; all Cs अबभ्रमद् ( as in text ). —After 5, Dt D4.6.8.14 T G M1–3 ( Cg.k.t comm. on l. 2 only ) ins.

918* रथी भगीरथो धीमान्ततो वै गोपतिध्वजे ।
तामपश्यन्पुनस्तत्र तपः परममास्थितः ।

[ Except M3, all the above MSS. om. l. 1. —( l. 2 ) Dt D4.6.8 अपश्यत्. M3 अपि ( for तत्र ). ]

6 Cf. v.l. 4 and 7 —$^{a}$ ) Dt D6 8 Ct स तेन; Cm g.k as in text ( for अनेन ). D14 T1 2 [ अ ]भूद्; M2 [ अ ]सौ; Cg.k as in text ( for [ आ ]सीद् ). —$^{b}$ ) Dt D8 अत्यंतं; M2 नद्यर्थं ( for अत्यर्थं ) —$^{c}$ ) G1 विसस·· ( damaged ) G4 damaged after गं in $^{c}$ up to बिन्दु in$^{d}$. —After 6, Dt D1.6 8 14 S ( except M4 )Cg ( Cm comm on l. 8; Ck.t on l 7–8 ) ins.

919* तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ।
ह्लादिनी पावनी चैव नलिनी च तथैव च ।
तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ।
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रश्चैता दिशं जग्मुः प्रतीचीं तु दिशं शुभाः । [ 5 ]
सप्तमी चान्वगात्तासां भगीरथरथं तदा ।
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ।

[ ( l. 2 ) T3 नदिनी ( for नलिनी ). M2 तु ( for second च ). D14 T1.2 G2.4 M1.3 ( after corr. *sec. m.* ) तथापरा ( for तथैव च ). —( l. 3 ) D6 गगा शिवजला शुभा; T3 गगा शिवजटाच्छुभा ( both sic ) ( for the post. half ). —( l. 4 ) D4 शीता ( for सीता ). D4 T3 G1.3 M2 शुभा ( for महा- ). —( l. 5 ) D4 तु ता; D14 T G2 4 M1–3 स्वेता ( for चैता ). D14 illeg. for तीची in प्रतीची. M2 च ( for तु ). D4 14 S ( except M4 ) शुभोदकाः ( for दिशं शुभा· ). —For ins. see below. —( l. 6 ) D4 14 S ( except M4 ) भगीरथमथो नृपं ( for the post. half ). —( l. 7 ) = $21^{ab}$. Dt T2 दिव्य- ( for दिव्यं ). —( l 8 ) T2 गंगां ( for गङ्गा ). D14 T2 [ अ ]नुव्रजेत्. G1.3 त गंगा पृष्ठतोन्वगात् ( = $21^{d}$ ), M1.3 गगा त चान्वगाच्छनैः ( M3 °गाद्रुतं ) ( for the post. half ). ]

—After l. 5, T2 G2 M1.3 ( *inf. lin. sec. m.* ) ins. :

920* तथैवालकनन्दा च विश्रुता लोकपावनी ।
[ K ( ed. ) चालिका नाम. ]

7 $^{b}$ ) G1.3 आस्थिता; G2 M1.3 आश्रिता ( for आगता ). Ś1 D1–3.5.7.9.12 ततश्च धरणीं गता( D9 °तां ); D11 ततश्च धरणीतलं. —After $7^{ab}$, Ś1 D1–3 5 7.9.11.12 ins. 922* and read $7^{cd}$ after l. 2 of 921*. —$^{c}$ ) Ś1 D1–3.5.7.9.11.12 उत्ससर्ज( D2 om. [ hapl. ] second स ); Dt D6.8 असर्पत ( for व्यसर्पत ). D14 बलं ( sic ) ( for जलं ). —$^{d}$ ) G1–3 M1 तीव्रवेग- ( for तीव्रशब्द- ). D2.3.7.9 G1.3 -पुरःसरं. Ck.t cite $^{d}$ as in text. ❀ Cg : गगनादिति । तीव्रशब्दे

ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तथा ।
व्यलोकयन्त ते तत्र गगनाद्गां गतां तदा ॥ ८

विमानैर्नगराकारैर्हयैर्गजवरैस्तथा ।
पारिप्लवगताश्चापि देवतास्तत्र विष्ठिताः ॥ ९

G. 1 45 13
B. 1 43 10
L 1 40 14

हेतुरयम् । ❀—For 4–7, Ś1 Ñ2 (Ñ1 missing) V B D1–3 5 7.9–13 M4 (Ś1 D1–3 5.7.9 11 12 for $4^{c}$–6) subst

921* तस्मिन्पपात गगनाद्गङ्गा देवनदी च्युता ।
वेगेन महता राम शिरस्यमिततेजसः ।
आकाशगङ्गामासाद्य धारयामास शंकरः ।
तत्र संवत्सरं पूर्णं बभ्राम परिमोहिता ।
गङ्गा शिरसि देवस्य निःसृता वेगवाहिनी ।
ततः प्रसादयामास पुनरेव भगीरथः ।
गङ्गायाः परिमोक्षार्थं महादेवमुमापतिम् ।
तस्याथ वचनाद्गङ्गामुत्ससर्ज भगार्दनः ।
जटामेकां समाक्षिप्य स्रोतः संजनयन्स्वयम् ।
स्रोतसा तेन सुस्राव गङ्गा त्रिपथगामिनी ।
पावयन्ती जगद्राम पुण्या देवनदी शुभा ।

[ (l. 1) V4 तस्मात्. D2 दिव (for च्युता).—(l. 2) V4 B3.4 D10 शिवस्य, D2 शिरसा (for शिरसि). After l 2, Ś1 D1–3 5.7 9.11.12 read $7^{cd}$. —Ñ2 V B D10 13 M4 om. l. 3. —(l. 3) D3 आभ्यास्य (sic), D7.9 आभाष्य (for आसाद्य). —(l. 4) Ś1 D5 12 तत; B4 अत्र (for तत्र). Ñ2 D5 13 परमोहिता. D3.7 परिबभ्राम (by transp.) मोहिता (for the post. half). —(l. 5) Ś1 B4 D1–3 7 9 12 विधृता; V1 D11 विस्तृता; V2 विस्मृता (sic), V4 B1 विसृता; D5 विवृता; M4 विहृत्वा (for नि सृता). V4 [उ]रगवाहिनी, D1 °गामिनी (for वेगवाहिनी). —After l. 5, D1–3.7.9 11 (D2.11 l. 1 only) ins. 924*. —D7 om. l. 7–9. —(l. 7) D12 प-मोक्षार्थं. M4 स हि देवम् (for महादेवम्). —(l 8) V4 तस्याः; D3 तस्याद्य; M4 तथास्य (for तस्याथ). Ś1 D2.3.5.9.12 भगाक्षि(D2 9 °क्ष)हा; V1 D11 महेश्वरः; V2 जनार्दनः, B1 तदा हरः; D1 गजार्दनः (marg. gloss गजासुरस्य अर्दनः रुद्रः) (for भगार्दनः). —(l. 9) V4 करीम् (sic) (for जटाम्). Ś1 D3 5.11 12 समापीड्य; D2 9 °विद्ध्य (for समाक्षिप्य). D3 सजन*. V2 सम; V4 मम, D11 त्रयं (for स्वयम्). V1 निर्गमनार्थं ददौ शिवः (hypermetric) (for the post. half). —(l. 10) Ś1 V3 B4 D1–3.5.7 9.11.12 M4 ततस् (V3 B4 D11 M4 गंगा) त्रिपथगा नदी (for the post. half). —(l. 11) Ś1 V2 B1.2 D1 5.11.12 प्लावयती, V4 पावय*, D3 °*ती (for पावयन्ती). D2 जटाद् (for जगद्). Ś1 D5.12 धाम (for राम). M4 गगा (for पुण्या). ]

—Ñ2 B3.4 D10 M4 cont., Ś1 D1–3.5.7.9 11.12 ins. after $7^{ab}$.

922* तां प्रस्रुतामृषिगणाः शिरसा जगृहुस्तदा ।
सेन्द्रैः सुरगणैः सार्धं पूजयन्तो महानदीम् ।

[ (l. 1) Ś1 D2.5.11.12 प्रच्युताम्; D9 प्रसन्ना (for प्रस्रुताम्). Ñ2 B3 D10 तथा (for तदा). —(l. 2) D1 पूजयित्वा. ]

—Ś1 D1–3.5.7.9.11 (l. 2 after $17^{ab}$ and l. 5 after 928*).12 M4 (second time) cont., while Ñ2 (Ñ1 missing) V B D10 13 (after $9^{ab}$) ins l 1 after 9, l. 2 after $17^{ab}$ and l. 3–5 after 928*

923* स्वयं चानुजगामैनां ब्रह्मा लोकपितामहः ।
नागाश्च शोधयामासुर्मार्गं तस्या महौजसः ।
जेपुर्देवर्षयो जप्यं सिद्धाश्च परमर्षयः ।
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
मुनिसंघा मुमुदिरे प्रह्लादं जगदाप्नुवत् ।

[ (l. 1) D5 चात्र; D12 वात्र (for चानु-) Ś1 स्वय चात्राजगामैना, V2 स्वय जगाम तत्राथ; V4 स्वयंभूराजगामैना (for the prior half). Ś1 ब्रह्म- (for ब्रह्मा). V2 -पितामह (sic) —(l 2) D1 नगाश्च V4 गाधयामासुर्; D1 (gloss शेषो वप्र इति केपि पर्वता एव तस्या वप्रीभूता) 9 शेधया° (for शोधयामासुर्). V1–3 B2 M4 अस्या; B1 3.4 D10 13 अस्य; D9 तस्य (for तस्या). V4 मार्गमाणस्य (sic) (for मार्गं तस्या). —(l. 3) Ś1 जपन्, V4 B4 D12 नेपुर् (for जेपुर्). D3 7 दिव्यं, D5 9 11 12 जाप्य (for जप्य). —Ś1 D5.12 om l. 4–5 —(l. 5) V2 मुनिसस्था, B1 °सिद्दा (for मुनिसघा). V1 च मुदिरे (sic) V4 B1 D10 आप्लवान् (sic); B2–4 आप्ल(B4 °प्लु [sic])वत्; D13 आप च (for आप्नुवत्). D11 ह्लादं जगदीप्सवत् (sic), M4 जह्लाद जगदव्य* (for the post. half). D1–3.7.9 मुनिसंघश्च मुदितो ह्लादयञ्जगदव्यय. ]

—After 7, Dt D4.6 8 14 S (except M4) ins, D1–3 7.9 11 (D2.11 l. 1 only) ins. after l. 5 of 921*:

924* मत्स्यकच्छपसंघैश्च शिंशुमारगणैस्तथा ।
पतद्भिः पतितैश्चान्यैर्व्यरोचत वसुंधरा ।

[ (l. 1) D11 G3 (before corr.) शिशुमारैर् (for शिंशुमार-). D1–3.7 11 -ग्रहैस् (for -गणैस्). D9 T2 तदा (for तथा). —(l. 2) Dt D6.8 [ए]व (for [अ]न्यैर्). Dt D14 वसुधरां. ]

8 M4 om. 8–11. D2 11 om. $8^{ab}$. D1 transp. $8^{ab}$ and $8^{cd}$. —$^{a}$) Ś1 D5.12 जगु(D5 °ग्मु)श्च देवगंधर्वाः; D3.7 G1 °गंधर्व-; M2 ततो देवाः सगंधर्वा. —$^{b}$) Dt D1.4.6.8.9 T3 M3 यक्ष- (for यक्षाः). B4 सिद्धा (for सिद्ध-). B1 तदा (for तथा). —Ñ2 V B D10 13 om. $8^{cd}$. —$^{c}$) G2 M1 तां (for ते). Ś1 D1–3.5 7.9.11.12 व्याकुलां (D12 °लं) प(D5 पा)तितां गंगां; T3 व्यलोकयन्ततो तत्र. —$^{d}$) D2 G1 गतास् (for गतां). Ś1 D1–3.5.7.9.12 तथा; M2 नदीं (for तदा). —After 8, D4 ins. श्रीमते रामानुजाय नमः.

9 M4 om. 9 (cf. v.l. 8). —$^{a}$) Ś1 D1–3.5.7.9.11.12 गरुडैर्हंसैर्; Ñ2 V B D10 13 विविधै राम; D14 T2.3 G4 Cm गगना°; Cg as in text (for नगराकारैर्). —$^{b}$) V4 नर-; G2 M1.3 नाग-; Ck as in text (for गज-). Dt D6.8 G2 तदा (for तथा). G4 गजैर्हयवरैस्तदा. —After $9^{ab}$, D13 ins. l. 1 of 923*. —D13 om. $9^{cd}$. —$^{c}$) Ś1 V3 4 B1.4 D3.5

·45· 14 · 43 19 · 40. 14 तदद्भुततमं लोके गङ्गापतनमुत्तमम् ।
दिदृक्षवो देवगणाः समेयुरमितौजसः ॥ १०
संपतद्भिः सुरगणैस्तेषां चाभरणौजसा ।
शतादित्यमिवाभाति गगनं गततोयदम् ॥ ११
शिंशुमारोरगगणैर्मीनैरपि च चञ्चलैः ।
विद्युद्भिरिव विक्षिप्तैराकाशमभवत्तदा ॥ १२
पाण्डुरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा ।
शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ॥ १३
क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ।
विनतं क्वचिदुद्धूतं क्वचिद्याति शनैः शनैः ॥ १४
सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ।
मुहुरूर्ध्वपथं गत्वा पपात वसुधां पुनः ॥ १५

---

परिप्लव-; D1.2 °प्लवं; D10 तपारिप्लव- (sic), D11 परिप्लुतं (for पारिप्लव-) Ś1 D1–3 5 7 9 11 -गताश्चान्या( Ś1 D5.9 °न्ये), B1 -गतैश्चैव; D4 -गतांश्चापि (sic) (for -गताश्चापि). ❀ Cv पारिप्लवगतां; Cr m k t पारिप्लवगताः; Cg पारिप्लवगतैः ❀ —d) V2 B4 T1 (also within bracket) G1 3 चापि (G3 °ति-) (for तत्र) Ś1 D1 3 5.7.9 11 12 धिष्ठिताः; B1 वेष्टिताः; B4 [अ]धिष्ठिताः; D2 T3 निष्ठिताः; G1–3 M1 3 (sec. m) विस्मिताः; Cg as in text (for विष्ठिताः) —After 9, Ñ2 V B D10 read l. 1 of 923*.

**10** M4 om. 10 (cf. v l. 8). —a) B4 G1 3 तं; Cg as in text (for तद्). Ś1 Ñ2 B2 Dt D6.8 9 °मिमं; B3 °मयं; D2 °मसूत् (for अद्भुततमं). V1 लोक- (for लोके). —b) Dt D6 8 गंगावतरम्; D12 गंगाप*नम्. V1 उद्यमं (for उत्तमम्). —d) Ś1 Ñ2 V2–4 B Dt D1–3 5–12 G1 3 समीयुर्. V3 अमिततेजसः (hypermetric); D2 °सं; D14 °सा; Cg.k as in text (for अमितौजसः).

**11** M4 om. 11 (cf. v l. 8). D4 transp. 11 and 12. —b) Ś1 V1 B4 D2–5.7.9 11 M3 om. च. Ś1 D5 श्चाभरणौजसां (sic); B1 आभरणज्वलं. In place of b Dt erroneously reads 12b. D12 संछाद्याकाशमोजसा. —c) V4 समादित्यम्. Ś1 Ñ2 V B D1–3.5 7 9.10 13 [आ]सीत्तद् (Ś1 B1 D5.13 °त्तु; V2 4 °च्च); Cg as in text (for [आ]भाति). D11 शतादित्यनिभं त्वासीद्; D12 शरादित्यमेवास्रीत्र (corrupt). —d) V4 शत- (for गत-). —After 11, Ś1 Ñ2 V B D1–3 5 7.9–13 read 14–15b.

**12** D4 transp. 11 and 12. —a) Ñ2 V B D1–3.5–7. 9–13 शिशुमार-. —b) V3 मत्स्यैर्; B4 **र् (for मीनैर्). M4 om. च (submetric). D11 सुचंचलैः; D12 वर्चवलैः (sic). T2 विमानैरपि चंचलैः. —After 12ab, D3.7 ins.:

925* शोभमाना भग(D3 °*)वती द्रुतं प्रतिययौ तदा ।

—c) V1 D13 M4 Cg विक्षिप्तम्; D10 *क्षिप्तैर्; T2 G1.3 निक्षिप्तैर्; Cm k t as in text (for विक्षिप्तैर्). —d) Ś1 Ñ2 V1–3 B1–3 D5.10–12 वृतं; V4 B4 D2 3.7 द्रुतं; D1 धृतं; D9 marg, D13 भृतं (for तदा).

**13** a) S (except T3) पांडरैः; Cm.g as in text. B2(after corr. as in text) सलिलोत्पीतैः; D1 (gloss) फेनैः; D3 7° त्तारैः; D11 °लैः शीतैः, D13 °त्पातैः; all Cs as in text (for सलिलोत्पीडैः). —b) Ś1 Ñ2 V B D1–3 5 7 9–13 की( V4 D1.2 7.12 का)र्यमाणं; Cm.g k कीर्यमाणैः(as in text). G2 4 M1–3 सहस्रशः(G4 °थ). —c) M3 [आ]भाति; Cm g as in text, Ck [आ]कीर्णैः (for [आ]कीर्णं). Ś1 V3 B4 D1–3 5 7 9 11 13 शरच्छुद्ध( V3 B4 D11.13 °भ्र)मिवाभाति( D3 °कीर्णं); Ñ2 V1 4 B1–3 D10 शरदभ्र( V1 B1 °चंद्र)मिवाभाति; V2 D12 शरदाभा( D12 °द्बुधा [sic])मिवाभाति; M4 शारदाभ्रमिवाभाति. —d) Ñ2 B3 4 D2 13 हंसविप्लवैः; all Cs °संप्लवैः(as in text).

**14** Ś1 Ñ2 V B D1–3.5.7 9–13 read 14–15b after 11. —a) Ś1 Ñ2 V B D5.10–13 प्रयात्; D3 T2 यांति; D9 यायात् (for याति). —b) Ñ2 B3 D10 13 चायतं क्वचित् (D13 महत्). —c) Ś1 D5.11.12 विनम्रं; V2 4 B1.2 D1 3.7 9.13 T3 G2 M1.4 विततं; V3 विरतं; D4 विनीतं; Cm.g.t विनतं (as in text). Ś1 D5.11.12 उद्भूतं; Ñ2 V2 3 B Dt D1 3 4 7–10 T3 Cm.g उद्धृतं; V4 अन्यूनं; D2 अभ्रांतं; Ck उद्धतं; Ct as in text (for उद्धूतं). V1 विनतं कुंचितं धृतं. —d) Ś1 Ñ2 V B D1 3 5 7 9–13 M4 शनै( B1 समै)रपि (D11 °***)पुनः( D13 पुपि पुनः [sic]) क्वचित् (Ś1 पुनः); D2 शतं शनैरपि पुनः क्वचित् (hypermetric).

**15** Ś1 Ñ2 V B D1–3 5.7.9–13 read 14–15b after 11. —a) B4 सलिलं सलिलेनैव (by transp.). —b) Ś1 D1.5 11.12 अभ्या( D5.12 °भ्य)हनत्; Ñ2 V B D10.13 अभ्या( B1 D10 °भ्य, B2 °ध्या)वधीत्; G4 °गतं; Cg as in text (for अभ्याहतं). —After 15ab, Ś1 D1–3.5 7.9.11 (repeats after 930*).12 ins.; Ñ2 V B D10.13 M4 ins. after 930*:

926* स्ववेगोद्भासितजला फेनमालावतंसका ।
महाजलावर्तवती महावेगप्रवाहिनी ।

[(l. 1) Ñ2 V1 B4 सु- (for स्व-). Ś1 D1–3.5.7.9.11 (first time).12 स्व( D2 स; D11 सु)वेगोद्भ( D1–3.7.9 °द्धा)मितावर्ता; V2 4 सु( V4 स्व)वेगोद्भ्रामितजला (for the prior half). Ñ2 B3 (m. also as above and हस-) D10.13 पद्म-; D12 फलेन (sic) (for फेन-). V2–4 B1.2( m. also) [अ]वतंसिका. —(l. 2) B1 -जला भगवती; D1 -कुलावर्तवती, D9 -जलावतसवती (hypermetric); D11( first time) -जलावर्त-

तच्छंकरशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ।
व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ १६
तत्रर्षिगणगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ १७
शापात्प्रपतिता ये च गगनाद्वसुधातलम् ।
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ १८
धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता ।
पुनराकाशमाविश्य स्वाँल्लोकान्प्रतिपेदिरे ॥ १९
मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ।
कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥ २०
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥ २१ G. 1. 45 2? B. 1. 43 31 L. 1. 40. 27

नदी (for -जलावर्तवती). Ś1 D1–3.5.7.9.11 (first time).12 -फेन- (for -वेग-). V1.2.4 B1 -प्रमाथिनी; V3 D1 -प्रवर्तिनी (for -प्रवाहिनी) ]

Thereafter, Ñ2 V B D10.11 (after 926* r).13 M4 read 931*. —$^c$) Ñ2 V3 B3.4 D10.13 पुनर्; V2 स्वर्गाद्; G2.3 M1 क्वचिद् (for मुहुर्). Ś1 Ñ2 V B D1–3.7.9–11.13 ऊर्ध्वमधो (V1.3 °पथा; V4 B4 D1–3.7.9.10 °मथो); D4° गतिं; D14 T1.2 G4 °मुखं (for ऊर्ध्वपथं) V3 गंगा (for गत्वा). D5 मुहूर्तं स्वमथो भूत्वा; D12 मुहूर्तोर्ध्वमथो गत्वा. ❀ Ct: ऊर्ध्वपथगमने सलिलयोरभ्याघातो निमित्तम्। So also Ck ❀ —$^d$) D14 T1.2 G4 ततः (for पुनः). Ś1 Ñ2 V B D1–3.5.7.9–13 धरणीतले (V1.3 °ल); D4 T3 G1.3 M4 वसुधातलं (M4 °ले). —After 15, M3 ins.:

927* नागलोकात्परिभ्रष्टा प्लावयित्वेन्दुमण्डलम् ।

**16** T1 om. 16$^{ab}$ —$^a$) Ś1 तर्जं हर-; B4 तत्तु शिव-; Cm.g as in text (for तच्छंकर-). —$^b$) Ś1 Ñ2 V2–4 B D1.3.5.7.9–13 M4 गतं; V1 प्राप्तः; D6 om. (hapl.); M2 भ्रांतं (for भ्रष्टं). Ñ2 V B D1–5.7.9–13 M4 भूमितलं पयः (D1–5.7.9.11.12 पुनः) —Ñ2 V B1–3 D10.13 om. 16$^{cd}$. —$^c$) Ś1 B4 D1–3.5.7.9.11.12 विरराज; M4 विससर्प (for व्यरोचत). B4 नदी-; D2 तत्र; M3 तथा (for तदा). —$^d$) T3 विमलं (for निर्मलं). D1 -कल्मुखं (sic); D9 -तोयदं (for -कल्मषम्).

**17** $^a$) Cm.g तत्र (as in text). Ś1 (after corr. as in text) ग्रहाः सघन-; Ñ2 V B D1–3.5.7.9–13 ग्रहाः सगण-; D14 T1.2 G4 °देवर्षि- (for तत्रर्षिगण-). —After 17$^{ab}$, Ñ2 V B D10.11.13 ins. l. 2 of 923*. —D4 reads from तं in $^c$ up to $^d$ in marg. —$^c$) Ś1 (m. also as in text) Ñ2 V B D2.3.5.7.9–13 -संग (D2 °*) ते तोये (B1 °तोये च). D1 गवांगसंगते तोये. —$^d$) Cm.g.t पस्पृशुः (as in text). Ś1 D1–3.5.7.9.11.12 पवित्रत्वात्तु (D2.11 °त्सु; D3.7.9 °त्र) पूजिते; Ñ2 V1.3.4 B D10.13 पवित्रे तत्र पूजिते; V2 पाविते तत्रपूजिते.

**18** Ś1 Ñ2 V B D1–3.5.7.9–13 transp. 18$^{ab}$ and 18$^{cd}$. —$^a$) D3.5.7 G2 M1 प्रतिगता (for प्रपतिता). Ś1 D1.3–5.7.9.12 तु (for च). D2 शापात्पृषति तोयं तु. —$^c$) Ñ2 V B D10.13 कृत्वाभिषेकं ते सर्वे. —$^d$) D1 °कल्मुखाः (sic); M1 (after corr. *inf. lin.* as in text) बत°; M2 °किल्बिषाः; Cm.t as in text (for गतकल्मषाः).

**19** $^a$) D14 पुरस्; M4 ततस् (for पुनस्). —$^b$) D1 M3 तोयेन च (M3 °नैव) (for तोयेनाथ). Dt D6.8 शुभान्विताः; T3 सुखान्विताः (for सुभास्वता). G1.3.4 तोयनादेन (G4 °येनायुत) भास्वता; G2 M1.4 गगातोयेन भास्वता (M4 देहिनः) —Ś1 reads 19$^c$–20 in marg. —$^d$) Ś1 ...न् (for लोकान्). G1.3 लोकान्स्वान् (by transp.). —For 19, Ñ2 V B D1–3.5.7.9–13 subst., while Ś1 subst. for 19$^{ab}$:

928* पूतात्मानः पुनस्तेन सलिलेन दिवं गताः ।

[ V2 B1 पुनस्तत्ते, V4 तत°, D1 पुमात्मने, D11 °तु; D13 °च (for पुनस्तेन) B4 यथा (for गताः). ]

—Thereafter Ñ2 V B D10.13 ins l. 3–5, D11 l. 5 of 923*.

**20** D1–3.5.7.9.12 om., Ś1 reads in marg. 20 (for Ś1 cf. v.l. 19). —$^{ab}$) M4 मुमोद (for मुमुदे). G1–3 M1 च ततो; all Cs (except Cv) as in text (for मुदितो). Ñ2 V B D10.11.13 त्रयोपि लोका मुदिता गंगावतरणे तदा. ❀ Cv अत्र पूर्वमुदितो लोकः तदानीं मुमुदे। मोदातिशयप्रदर्शनाय उभयपदप्रयोगः। ❀ —Ñ2 V B D10.11.13 om. 20$^{cd}$. —$^c$) M4 कृत्वाभिषेकं गंगायां. —$^d$) M4 विमलो (for बभूव). Dt D6.8 T3 M4 गतकल्मषः; Cg as in text (for विगतक्लमः).

**21** $^a$) Dt D4.6.8 T1 हि (for ऽपि). —$^b$) D13 आश्रितः (for आस्थितः). Ś1 D1–3.5.7.9.11.12 दिव्यमारुह्य वै रथं. —After 21$^{ab}$, B3 ins.:

929* पूजितो विविधैर्लोकैर्गङ्गानयनकर्मणा ।

—$^c$) V2 ययावग्रे. Dt D6.8 -राजस् (for -तेजास्). M4 ययौ प्रदर्शयन्मार्गं. —$^d$) B1.2 D5.13 M4 पृष्ठ (B1 पति [sic]) तोन्वयात्. —After 21, Ñ2 V B D10.11.13 M4 ins.:

930* महातरङ्गौघवती प्रनृत्यन्तीव राघव ।

[ V2 महातरगान्सवती (for the prior half). V2 नृत्यतीव (submetric). ]

—Thereafter read (D11 twice) 926*. Then all cont..

931* प्रययौ विलसन्तीव भगीरथरथानुगा ।

[ V4 विहसती. D13 च (for [इ]व). B1 D11.13 M4 -पथा (M4 °दा) नुगा. ]

I. 45 28 . I 43 31 . I. 40 29 देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ।
गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ २२
सर्वाश्चाप्सरसो राम भगीरथरथानुगाः ।
गङ्गामन्वगमन्प्रीताः सर्वे जलचराश्च ये ॥ २३
यतो भगीरथो राजा ततो गङ्गा यशस्विनी ।
जगाम सरितां श्रेष्ठा सर्वपापविनाशिनी ॥ २४

इति श्रीरामायणे बालकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

**22** V3 om 22–$23^{b}$ —$^{b}$) T2 -रक्षसा:. G2 दैत्यराक्षसदानवा: (by transp ) —$^{c}$) V2 गंधर्वयक्षसिद्धौघा:; D12 गंधर्वा यक्ष:प्रवरा:. —$^{d}$) Ś1 गंगामनु महोरगा:. —For 22, M4 subst.

932* देवा: सिद्धर्षयश्चैनां सकिंनरमहोरगा: ।
सदैत्यदानवगणा: सहापि मृगपक्षिभि: ।

**23** V3 om. $23^{ab}$ (cf v l. 22). —$^{a}$) V4 D6.8 T1 G1.4 सर्पाश् (for सर्वाश्) V1 सर्वाप्सरोगणा. G1 नाम (for राम). —$^{b}$) D1 9 M2 Cg -र(D9 प)थानुगां; D11 M4 -पथा(M4 °दा)नुगा:; Ck.t -रथानुगा: (as in text). —$^{c}$) V1 D13 गंगामनुगमन्प्रीता:; V2.3 B1.4 गंगानुगमन (V3 °ने)प्रीता:; V4 गंगादेवी मन:प्रीता. —$^{d}$) V4 D2 जलधराश्. —For $23^{cd}$, M4 subst., while B1 ins. after 23.

933* गंगामनुययुस्तत्र (B1 °भिययुस्ते च)सर्वाश्च सरित: शुभा: ।

**24** $^{a}$) Ś1 D5.12 यथा; V3 M4 ततो; Cg.k t as in text (for यतो) V4 भगीरथो यतो (by transp ). V1 यातो; B1 गच्छेत् (for राजा). —M4 om. from $24^{b}$ up to I. 43. $1^{a}$. —$^{b}$) Ś1 D5 तथा; V4 D3 तत्र; Cg.k.t (implied) as in text (for ततो). V4 सरिद्वरा (for यशस्विनी). —$^{cd}$) Ś1 Ñ2 V B D1–3.5.7 10–12 नरशार्दूल (for सरितां श्रेष्ठा). Dt D6.8.9 G2 M1 -प्रणाशिनी (for -विनाशिनी). Ś1 Ñ2 V B D1–3.5.7.10–12 सर्वलोक(B1 °देव)नमस्कृता. D13 जगाम नरशार्दूलमथ लोकनमस्कृता. —After 24, Ś1 (*sec. m.* on an additional fol.) Dt D4.6.8.9.14 T G M1–3 Cg k.t (Cv.r comm. on l. 9 only, Cm on l. 3–9) ins.:

934* ततो हि यजमानस्य जह्नोरद्भुतकर्मण: ।
गङ्गा संप्लावयामास यज्ञवाटं महात्मन: ।
तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुस्तु राघव ।
अपिबत्तु जलं सर्वं गङ्गाया: परमाद्भुतम् ।
ततो देवा: सगन्धर्वा ऋषयश्च सुविस्मिता: ।
पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ।
गङ्गां चापि नयन्ति स्म दुहितृत्वे महात्मन: ।
ततस्तुष्टो महातेजा: श्रोत्राभ्यामसृजत्पुन: ।
तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ।
जगाम च पुनर्गङ्गा भगीरथरथानुगा ।
सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा ।
रसातलमुपागच्छत्सिद्ध्यर्थं तस्य कर्मण: ।
भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नत: ।
पितामहान्भस्मकृतानपश्यद्दीनचेतन: ।
अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् ।
प्लावयत्पूतपाप्मान: स्वर्गं प्राप्ता रघूत्तम ।

[(l. 1) T3 वा (for हि). —(l 3) D9 T3 G1.3 राजा; D14 T1.2 G4 यज्वा (for जह्नुस्). Ś1 स, Dt D6 8 च; G4 [अ]थ (for तु) ※ Cm तस्या इति ।, Cg तस्या इति । वलेपन गर्वम् ।, Ct . तस्या अवलेपन गर्वमित्यर्थ । ※ —(l 4) Ś1 G1.3 तज्जलं; D14 T G4 च°, G2 M1–3 सलिल (for तु जल). —(l. 5) D9 T2 G1–3 M1 च (for स-) G2 M1 मुनयश् (for ऋषयश्). —(l. 6) Ś1 om जह्नु —(l. 7) G2 M1 Ctp [अ]नु- (for [अ]पि) G4 दुहितृत्व. —For ins see below. —(l. 8) D9 M3 महाराज (for °तेजा·) G2 M1 व्यसृजत्. Ś1 Dt D6.8 प्रभु: (for पुन:). —For ins. see below —(l. 11) G1.3 विवेश सागर चापि (for the prior half). —For ins see below. —(l. 14) Ś1 Dt D6 8 गतचेतन· (Ś1 °नान्), D9 T3 G2 M3 °चेतस (for दीनचेतन:). —(l. 15) D14 T1.2 G2.4 M1.3 तं; M2 [ए]तद्- (for तद्-). —(l. 16) D4.6 प्लावयेत्. T2 पूतमात्मानो, M3 धूत° (for पूतपाप्मान·). M2 अभ्यषिञ्चत्ततस्तेन (for the prior half).]
—After l. 7, M2 ins.

935* भगीरथोपि राजर्षिस्तुष्टाव द्विजसत्तमम् ।

—After l. 8, G2 M1.3 (*inf. lin. sec. m.*) ins.:

936* विसृज्य गङ्गां जह्नुश्च ज्ञात्वा प्राप्तं भगीरथम् ।
पूजयित्वा मुनिरयं यज्ञवाटमुपागमत् ।

[(l 1) M3 राजेन्द्र ज्ञा*(lacuna) (for जह्नुश्च ज्ञात्वा). —(l. 2) M3 यथान्यायं (for मुनिरय).]
—After the prior half of l. 13, G1–3 M1 ins.:

937* दिव्यं स्यन्दनमास्थित: ।
दिशं प्रागुत्तरां प्रायात्.

—After 934*, G2 M1 cont.:

938* ततस्तु गङ्गां प्रतिलभ्य राजा
दिलीपसूनुर्गगनाच्च शंकरात् ।
हृष्टोवतार्याशु नृपाच्च जह्नो:
संभावयामास पितामहान्स: ।

Colophon. Ñ2 V B D1–3.5.7.10–13 M4 om. (for M4 cf. v.l. 24; the rest continue the Sarga). —*Kāṇḍa name*: D4 om. —*Sarga name*: D9 गंगावतरणं. —*Sarga no.* (figures, words or both): Ś1 Dt D4.6 8.14 S (except M4) 43; D9 46. —After colophon, T2 concludes with श्रीरामचन्द्राय नम:; G1.2.4 श्रीरामाय नम:; G3 श्रीमते रामानुजाय नम:; M2 श्री......म:.

# ४३

स गत्वा सागरं राजा गङ्गयानुगतस्तदा ।
प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १
भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २
तारिता नरशार्दूल दिवं याताश्च देववत् ।
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३
सागरस्य जलं लोके यावत्स्थास्यति पार्थिव ।
सगरस्यात्मजास्तावत्स्वर्गे स्थास्यन्ति देववत् ॥ ४
इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति ।
त्वत्कृतेन च नाम्ना वै लोके स्थास्यति विश्रुता ॥ ५ G. I. 45. 39 B. I. 44. 5 L. I. 40. 40

## 43

☞ Ñ1 missing Sarga 43 ( cf. v l. I. 33. 8 ). Ñ2 V B D1–3.5.7.10–13 M4 continue the previous sarga.

**1** M4 om. $1^{a}$ (cf. v.l. 1. 42. 24).—$^{a}$) D9 repeats( ditto. )स. D2 सागरो. Ñ2 B3 D10.13 राम ( for राजा ).—$^{b}$) V1 B1.3 4 D3 6.8( before corr. ).9.11 12 T2 G2.4 M1.3 गंगाया ( for गङ्गया ). B1 अनुगस् ; M4 [ अ ]नुसृतस् ( for [ अ ]नुगतस् ).—$^{d}$) Ñ2 V B D10.13 M4 खा( V4 B1 ख्या )तं यत्( B4 तत् ; M4 तैः ) स( V4 सा )गरात्मजैः. —After 1, Ñ2 V B D10.11.13 M4 ins. :

939* उपानीय ततो गङ्गां रसातलतलं प्रभुः ।
तर्पयामास तान्सर्वान्भस्मभूतान्पितामहान् ।
अथ गङ्गाम्भसा तत्र प्लाविताः सगरात्मजाः ।
दिव्यमूर्तिधरा भूत्वा जग्मुः स्वर्गं मुदा युताः ।

[ V2 om. ( hapl. ? ) l. 1–3.—(l. 1) Ñ2 V3 B2 D10 उपनीय. V4 D10.11.13 गगा —(l. 2) M4 सर्वांस्तान् ( by transp. ). D10 om. ( hapl. ) from the post. half of l. 2 up to $2^{a}$ ( cf. Ñ2 variants of $2^{a}$ ). B3 D13 M4 भस्मीभूतान् ( for भस्म° ). Ñ2 पितृंस्तेन महात्मना ( for the post. half ). —(l. 3) B4 D11 तेन ( for तत्र ). D11 M4 पाविताः ( for प्लाविताः ).—B3 repeats l. 4 before $2^{ab}$ ( r. ).—(l. 4) V4 -तरा ( for -धरा ). D11 दिव्यरूपधराः सर्वे ( for the prior half ). D13 स्वर्गे ( for स्वर्गं ). V1.2.4 M4 [ अ ]न्विताः ( for युताः ). ]

**2** D10 om. $2^{a}$ ( cf. v.l. 1 ). B3 repeats $2^{ab}$.—$^{ab}$) M3 [ उ ]त ( for [अ]थ ). Ś1 D1 5.12 तेन; D2.3.7.9 देशे; G1.3 तस्मिन् ( for राम ). Ś1 D12 गांगोदेन नरोत्तम; D1–3.5.7.9 गं( D1 गां )गौघेन( D9 °घैश्च ) नरोत्तम; D10 पितृंस्तेन महात्मना ( for $^{b}$). Ñ2 V B ( B3 both times ) D13 M4 तान्दृष्ट्वा प्लावितान्सर्वान् पितृंस्तेन( M4 भस्मीभूतान् ) महात्मना ( M4 °नः ); D11 दृष्ट्वा संप्लावितान्सर्वामिहं( sic )स्तेन महात्मना. —$^{cd}$) D1–3.7.9.11 -गुरुर् ; Ck as in text ( for -प्रभुर् ). Ñ2 V B D10.13 M4 भगीरथमुवाचेदं ब्रह्मा सुरगणैः सह( V4 °णैस्तदा ).

**3** $^{a}$) D7 त्वरितास्. D2.3.7.9.11.12 ते नृप( D12 नर )श्रेष्ठ; G2 M1 च महाराज( G2 °जा ) ( for नरशार्दूल ). Ś1 D1.5 तारितानि नृपश्रेष्ठ.—$^{b}$) Ś1 D1.5.12 यातानि; D2.3.7.9 T3 G1.3 M2 याता हि ( for याताश्च ). Dt देववित् ( for देववत् ). Ñ2 V B D10.13 M4 त्वया पूर्वे( V3 पूताः )पितामहाः; D11 दिवं जा( या )ताः पितामहाः.—T2 om. ( hapl. )$3^{c}$-4. —$^{c}$) V1 B4 D7.9 M4 षष्टिं.—$^{d}$) G4 सागरस्य.—After 3, Ñ2 V B D10 11( followed by 941* ).13 M4 ins

940* अक्षयः सगरस्यायं नाम्ना ख्यातो महोदधिः ।
व्यक्तं सागर इत्येवं ख्यातिं लोके गमिष्यति ।

[ (l. 1) V1 अक्षय; V4 अन्वयु° ( for अक्षय° ). B1–3( B2 marg. also ) सा( B3 स )गरश्च ( for सगरस्य ). V4 [ अ ]स्य ( for [ अ ]य ). B1 नन्वाख्यानो ( for नाम्ना° ). M4 भविष्यति( for महोदधि° ).—(l. 2) D11 व्यक्ति; M4 राजन् ( for व्यक्तं ). V4 [ ए ]ष; B4 D10 M4 [ ए ]व ( for [ ए ]वं ). V1 लोकख्यातिं; V4 D10 ख्यात( D10 °तो ) लोके; B4 ख्यातिर्लोके ( for ख्यातिं लोके ). ]

**4** T2 om. 4 ( cf. v.l. 3 ).—$^{ab}$) D12 सगरस्य. Ś1 D1.3.5.7.9.11.12 यावल्लोके ( by transp. ), D2 तावल्लोके( for लोके यावत् ). D5 पार्थिवः; D9 राघव ( for पार्थिव ).—M3 reads $4^{cd}$ *inf. lin.*—$^{c}$) D9 सागरस्य. Dt D4.6.8 सर्वे ( for तावत् ).—$^{d}$) Ś1 D5.12 लोके; Dt D4 6.8 Ct दिवि ( for स्वर्गे ). G2 देववित् ; Ck °वत् ( as in text ).—For 4, Ñ2 V B D10.13 M4 subst , while D11 ins. after 940* :

941* यावच्च सागरो लोके स्थितोऽयमिह शाश्वतः ।
सगरः सहितः पुत्रैस्तावत्स्वर्गे निवत्स्यति ।

[ (l. 1) D11 यतश्च् ( for यावच् ). M4 भवति ( for ऽयमिह ). V1 स सुनः ( for शाश्वतः ).—(l. 2) B1.4 सहितैः ( for सहित° ). V4 पूर्वैस् ( for पुत्रैस् ). D11 धर्मात्मा सगरो राजा ( for the prior half ). B3 वि° ( for निवत्स्यति ). ]
—After 4, Ś1 D1–3.5.7.9.11.12 ins. :

942* दिव्यमाल्याम्बरधरा दिव्यगन्धानुलेपनाः ।
दिव्यरूपधराश्चैव भविष्यन्ति गुणान्विताः ।

[ (l. 1) Ś1 -धृता; D5.12 -वृता ( for -धरा ).—(l. 2) D11 सर्वे ( for चैव ). D2.3.12 भविष्यंति. D1 गणान्विताः. ]

**5** $^{a}$) Ś1 तु; D2 T3 हि; Cg as in text ( for च ). T3 महिता ( for दुहिता ). Ñ2 V B D10.13 M4 राजंस् ; D9.11 G3.4 श्रेष्ठा ( for ज्येष्ठा ).—$^{c}$) Ś1 D1 5.12 तु; Dt D6.8 G1.3 M2 [ अ ]थ; D2 Cm च ( for वै ). D11 तत्कृते तव नाम्नाह (sic).—$^{d}$) Ś1 ( marg. as in text ) D1.2.5.9.12 लोक ( D2.9 °के )धात्रीति( D1 °तु ) ( for लोके स्थास्यति ). D3.7

I. 45. 40 . I. 44. 6 . I. 40. 40 गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च ।
त्रीन्पथो भावयन्तीति ततस्त्रिपथगा स्मृता ॥ ६
पितामहानां सर्वेषां त्वमत्र मनुजाधिप ।
कुरुष्व सलिलं राजन्प्रतिज्ञामपवर्जय ॥ ७
पूर्वकेण हि ते राजंस्तेनातियशसा तदा ।
धर्मिणां प्रवरेणाथ नैष प्राप्तो मनोरथः ॥ ८
तथैवांशुमता तात लोकेऽप्रतिमतेजसा ।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ९

---

लोकधात्री भविष्यति; D11 लोके ख्यातिं गमिष्यति. —For $5^{cd}$, Ñ2 V B D10 13 M4 subst.

943* भागीरथीति विख्याता त्रिषु लोकेषु भूपते ।

[ V1 गीयते; V2 भूतले; V4 B1 2 विश्रुता ( for भूपते ). ]

6 $^{a}$) Ś1 D1–3 5.7.9 11 12 गंगेति प्रथितं( D7 °थमं ) ( for गङ्गा त्रिपथगा ). D3.7 राम; D14 T1.2 G4 राजन् ( for नाम ). Ñ2 V B D10.13 M4 गंगेति गमनाद्भमेः ( B3 marg. also °द्राम; M4 °द्भमौ ); G2 गंगा या त्रिपथा नाम. —$^{b}$) Ś1 D5.11 12 तथा; Ñ2 V B D10 13 M4 ख्याता; D1–3 7.9 दिव्यं ( for दिव्या ) M4 om. च ( submetric ). —G2 om. $6^{cd}$. —$^{c}$) D4 M1 त्रिपथो. G4 पावयंती; Cm भाव° ( as in text ). —$^{d}$) Dt D8 T3 तस्मात् ; D6 तत्र; Cm as in text ( for ततस् ). —For $6^{cd}$, Ś1 Ñ2 V B D1–3 5.7 9–13 M4 subst .

944* भविष्यति सरिच्छ्रेष्ठा लोके त्रिपथगेति च ।
त्रिपथगेति नामास्यास्त्रिमार्गगमनादिदम् ।

[ Ś1 D1–3 5.7 9.12 om. l. 1. —( l. 1 ) V1 M4 त्रिलोकपथगेति च ( for the post. half ). B4 om. ( hapl ) from च up to ति in l. 2. —M4 om. ( hapl. ) from l. 2 up to l. 6 of 945* —( l. 2 ) D3.7 त्रिमार्गगा ( for त्रिपथगा ). Ś1 B1 D1.5.12 त्रिपथेति च नामास्यास् ( D1 °ख्यास् ); D9 त्रिपथगेति च नाम स्यात् ( hypermetric ) ( for the prior half ). Ś1 कृत; V1 4 इय; V2 इतः; V3 अभूत्, D1.11.12 स्मृत, D2 3 7 श्रुत, D9 स्मृता; D10 अपि ( for इदम् ). B1 त्रिमार्गगमनादिक, D5 त्रिनामागमनात्स्मृतं ( for the post. half ). ]

Then cont.

945* त्रीन्लोकान्पावयन्त्या वै सुरर्षिभिरुदाहृतम् ।
दिवि तारयते देवान्नागांस्तारयतेप्यधः ।
भुवि तारयते मर्त्यांस्तेन त्रिपथगा स्मृता ।
द्वितीयं चापि गङ्गेति गां गताया विशांपते ।
भागीरथीति चाप्येतत्तृतीयं नाम सुव्रत ।
भविष्यति च त्वत्प्रीत्या मत्प्रीत्या च विचक्षण ।
यावच्च भुवि गङ्गेयं भविष्यति महानदी ।
तावत्तवाक्षया कीर्तिर्लोकेषु विचरिष्यति ।

[ M4 om. l. 1–6 ( cf. v.l. 6 [ 944* ] ). —( l. 1 ) V1–3 B2 4 D7 प्लावयंत्या; V4 B1 भा( B1 ता )रयत्या; D2 पावयित्वा; D11 प्लावयत्या ( for पावयन्त्या ). V1.4 D9 उदाहृता Ś1 Ñ2 V B D1.2.5.9–13 om. l 2 and 3. —( l. 4 ) B1 द्वितीयां. V3 [ अ ]ति ( sic ) ( for [ अ ]पि ). Ś1 V2 D1.5 गां गतायां; D2 गंगायाश्च ( for गां गताया ). —( l. 5 ) D11 भगीरथीति. Ś1 D5 [ ए ]व; V1 D12 [ ए ]वं; D1 [ ए ]नं; D7.9.11 [ अ ]न्यत् ( for [ ए ]नत् ). D13 भागीरथैति वाप्येतत् ( for the prior half ). Ñ2 B3 D10.13 चापि; V4 राम; D9 वापि ( for नाम ). Ś1 D1 3 5 9 सुप्रभ; B4 सुव्रते, D2 सुप्रभ; D7 सत्तम; D10 सुव्रत ( for सुव्रत ). —D13 om. l. 6 —( l 6 ) D5 तु ( for first च ). D2 तत्प्रीत्या Ñ2 V1 B ( B1 marg also as above ) D10 त्व( B4 त )त्प्रीत्या च भविष्यति ( for the prior half ). D11 lacuna for मत्प्रीत्या. V1 °क्षणां, V3 B4 °क्षण; D9 °क्षणा ( for विचक्षण ). V2 त्वत्प्रीत्या चापि मत्प्रीत्या भविष्यति विचक्षण. —Ś1 D1–3 5 7 9 12 om l. 7 and 8. —( l. 7 ) B4 तु ( for च ). B4 [ इ ]ति ( for [ इ ]य ). —( l 8 ) V4 B2 प्रचरिष्यति D11 सर्वलोक भविष्यति ( for the post half ). ]

M4 further cont.

946* यावच्च कीर्तिरतुला तवेयं प्रभविष्यति ।
तावत्पुण्यकृतां लोके तव वासो भविष्यति ।
महत्कृतं त्वया पुण्यं गङ्गामा( न )यता दिवः ।
इयं लोके नृपश्रेष्ठ प्रतिज्ञा चापवर्जिता ।

7 $^{b}$) G1 3 M4 [ अ ]द्य ( for [ अ ]त्र ). V3 D1 °पः; B2 वसुधाधिप ( for मनुजाधिप ). —D13 om. ( hapl. ) $7^{d}$ and $8^{a}$. —$^{d}$) D3 lacuna for प्रतिज्ञाम् . Ś1 B1 D2 5.7.9.11.12 परिपालय; V1.2 M4 °वर्जयन् ; B2( before corr. as in text ) 4 ( as in text also ) D1.3 प्रतिपालय; T2.3 °मार्जय; M2 अनुव°; Cm g.k.t as in text ( for अपवर्जय ).

8 D13 om. $8^{a}$ ( cf. v.l. 7 ). —$^{a}$) Ś1 D5.12 पूर्वं केन; Ñ2 V B D1–3.7 9–11 पूर्वजेन; Cm g k.t as in text ( for पूर्वकेण ) Ś1 Ñ2 V B D1–3.5 7 9.10 12 G1 3 M3 [ अ ]पि ( for हि ) V2 °तस्तं; G3 राजन्स ( for ते राजंस् ). —$^{b}$) D1 केन; D5 स्वेन ( for तेन ). V4 [ अ ]भि-; D2 3.11 [ अ ]पि ( for [ अ ]ति- ). Ñ2 V1 3 4 B2–4 D10.12 13 सता; B1 यथा; D1 5 सदा; D4 T3 तथा ( for तदा ). V2 तेनापि सगरेण च; M3 सगरेण महात्मना; M4 तेनातिशयकर्मणा. —$^{c}$) D5 धर्मेण ( for धर्मिणां ). Ś1 Ñ2 V1.2.4 B D1–3 5.7.9–14 T1.2 M4 [ अ ]पि; V3 [ आ ]दौ ( for [ अ ]थ ). —$^{d}$) V3 [ ए ]वं; D9 T3 [ ए ]व ( for [ ए ]ष ). B4 D6 प्राप्तौ ( sic ). T3 प्राप्ता मनोरथाः.

9 $^{a}$) V4 तव; G4 तदा; Cg as in text ( for तथा ). D14 [ अं ]शुमतो. Dt D4 6.8 T3 G1–3 M1–3 वत्स; D3.7.9 वीर ( for तात ). —$^{b}$) V3 प्रथिततेजसा. —B4 om. ( hapl. ) $9^{c}$–$11^{b}$. D7 om. ( hapl. ) $9^{c}$–$10^{b}$. Ś1 om. $9^{cd}$. —$^{cd}$) D3.4.6.11.14 गंगा. D11 T3 प्रार्थयतां ( for °यता ). D1 3.9.11 वीर; D2 भूमौ; D5.12 तात ( for नेतुं ). Ñ2 V1 3.4 B1–3 D10.13 गंगां प्रार्थयमानेन; V2 गंगां प्रथयमानेन; Ct as in

राजर्षिणा गुणवता महर्षिसमतेजसा ।
मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च ॥ १०
दिलीपेन महाभाग तव पित्रातितेजसा ।
पुनर्न शङ्किता नेतुं गङ्गां प्रार्थयतानघ ॥ ११
सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ ।
प्राप्तोऽसि परमं लोके यशः परममंमतम् ॥ १२
यच्च गङ्गावतरणं त्वया कृतमरिंदम ।
अनेन च भवान्प्राप्तो धर्मस्यायतनं महत् ॥ १३
प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते ।
सलिले पुरुषव्याघ्र शुचिः पुण्यफलो भव ॥ १४
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ।
स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप ॥ १५
इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः ।
यथागतं तथागच्छद्देवलोकं महायशाः ॥ १६   G 1 45. 53 B. 1. 44. 16 L 1. 40. 54

text. —$^{d}$ ) T2 3 नाप( T3 °व )मार्जिता; G2 M1 नैव साधिना; Cg as in text ( for नापवर्जिता ) Ñ2 V1 3 4 B1–3 D1–3.7.9 11 13 न( D13 om. [ hapl. ] ) प्राप्तः( V3 °प्तं ) काम एष( V1 B1.3 D2 3 9 11 °व ) हि; V2 प्राप्ता कामयता न हि; D5 12 प्राप्तकामः समंजसा; Ct as in text

10 B4 om. 10, D7 om. 10$^{ab}$ ( for both cf. v.l. 9). —$^{a}$ ) Ś1 Ñ2 V B1–3 D5 10 13 T3 G3 M3 राजर्षीणां; Cg °र्षिणा ( as in text ). Ś1 D5 गुणवतां; Ñ2 V B1–3 D10 13 पुराणानां ( for गुणवता ). —$^{b}$ ) Ñ2 V1.3.4 B1–3 D10 13 -तेजसां. Ś1 महर्षिप्रमितौजसां; D1–3.5 9 11.12 महर्षिप्रतिमौजसा( D5 °सं [ sic ] ); Ck as in text ( for $^{b}$ ). —D14 reads 10$^{c}$–11$^{b}$ in marg. —$^{c}$ ) Ś1 Ñ2 V1.3 B2 3 D1–3.5.7.9 12.13 अतुल्य-; V2 अतुला ( sic ), V4 अनल्प-; B1 अतुलां ( sic ); D11 सुतप्त-; Ck.t as in text ( for मत्तुल्य- ). D1.2.9.12 13 वा ( for च ). Ś1 Ñ2 V1–3 B1–3 D3 5.7 11.13 M4 [ अ ]पि ( for [ ए ]व ). D10 अतुल्यतेजसा चापि; G2 तपसा मम तुल्येन. —$^{d}$ ) V1 क्षात्रधर्म-; D14 क्षत्रधर्मै; Ck as in text ( for क्षत्रधर्म- ). V2 -रतेन ( for -स्थितेन ). D3.7 हि; D11.12 वा ( for च ).

11 B4 om. 11$^{ab}$ ( cf. v.l. 9 ). D14 reads 11$^{ab}$ in marg. (cf. v.l. 10 ). —$^{a}$ ) V1 M3 महाराज ( for महाभाग ) —$^{b}$ ) D1 [ अ ]मितौजसा; D2 3 7.11 महौजसा; G3 [ आ ]दितेजसा ( for [ अ ]तितेजसा ). —$^{c}$ ) Ś1 Dt D3 5 6 8.14 G4 M4 शकिता; Ñ2 V1.4 B1.2.4 D1.10 शकितं; V3 B3 शंकितं; D13 शोधितं; G1.3 शक्या वै; M3 शक्यते; Ckp शाकिता ( for शङ्किता ). Ś1 गंगा; Ñ2 V1.3.4 B D2.5.10.12.13 तेन; D1.3.7 येन ( for नेतुं ). V2 पुनर्न गांगं तातेन; D11 पुनर्न शक्यां चान्येन. ❀ Ck कश्चिच्छाकितेति मृषोक्तिव्याख्याने प्रायतिष्ट । ❀ —$^{d}$ ) Ś1 तेन; V1.2 Dt D3.5 7 11.12.14 T3 M1 गंगा ( for गङ्गां ). V4 B4 प्रार्थयते; B1 प्रार्थनया ( for प्रार्थयता ). ❀ Cm : गङ्गामानेतुं न शङ्किता ।; Cg.k.t : सा पुनर्नेतुं न श( Ct शा )किता । ❀

12 $^{a}$ ) Ś1 Ñ2 V B D1–3.5.7.10–13 समनुप्राप्ता; M4 Ck समनुक्रांता; Cm.g t as in text ( for समतिक्रान्ता ). —$^{b}$ ) M4 सांप्रतं ( for प्रतिज्ञा ). D11 भरतर्षभ. —$^{c}$ ) V2 प्राप्तं च; D9 ( before corr. ) प्राप्नोति; D11 M4 प्राप्नोसि ( for प्राप्तोऽसि ). M3 [ अ ]नुपमं ( for परमं ). —$^{d}$ ) D14 यक्षः (sic) ( for यशः ). Ś1 त्रिदशसंहितं; Ñ2 V B D5.10–13 त्रिदश( B4 lacuna )संमतं; D1 त्रिदशसत्तमः; D2 7 G1 3 त्रिदश नमितं; D3 त्रिदशसमांत ( corrupt ), Ct परममम तं ( as in text )

13 $^{a}$ ) Dt D6 8 13 तच्च; D12 तस्य; Cm g as in text ( for यच्च ). V4 गंगावतरणं कृत्वा ( hypermetric ). —$^{c}$ ) Ś1 Ñ2 V B D1–3 5.7.10–12 M4 महत्प्राप्तं( D11 °प्ता; M4 °प्तो ); D13 सह प्राप्तं ( for भवान्प्राप्तो ). —$^{d}$ ) Cg [ आ ]यतनं (as in text). M4 भवान् ( for महत् ). Ś1 Ñ2 V B D1–3.5.7 10–13 धर्मस्थानं( Ś1 D13 °ने ) त्वयानघ( D12 °घः ); Cm t as in text ( for $^{d}$ )

14 $^{a}$ ) Ñ2 V1–3 B( B2 marg. as in text also ) D10.11.13 पावयस्व; G1.3 प्लावयन्स्व; Cm.g.t as in text ( for प्लावयस्व ) Ś1 D5.12 प्लावय त्वं स्वमात्मानं; V4 पावय सुतमात्मानं ( sic ). ❀ Ck परा प्लावयति स्मेत्यादिरुपसंहारेण वादः । ❀ —$^{b}$ ) Ñ2 V1.2.4 B D1.2.10.11 M4 सुरोत्तम; D3 नरोत्तमं ( for नरोत्तम ). Ś1 D5 12 मयोदिते; V1 D1–3.7 स( D2 प )दोदिते; V2 सुरक्षिते; V4 सदोचितं, B3 ( marg. as in text ) स्पदोचिते; T3 नरोचिते; M4 सुरोदिते; Cm g.k.t as in text ( for सदोचिते ) —$^{c}$ ) Ś1 Ñ2 V B1–3 Dt D1.4–6.8–13 G1.3 M2.4 -श्रेष्ठ ( for -व्याघ्र ). —$^{d}$ ) Ñ2 B3 D10.13 पुण्यफलाय च; V2 पुण्यतमो भव; V4 B2 पुण्यफलोद्भवः( B2 °वे ); D2 °भवेत् ; D7 °फलोदयः ( for पुण्यफलो भव ). ❀ Ck पुण्यफलमिति मत्वर्थी योऽजन्तः । ❀

15 $^{a}$ ) Ś1 Ñ2 V2–4 B D1–3.5.7.10–13 M4 सलिलं ( for सर्वेषां ). —$^{b}$ ) Ś1 Ñ2 V B D1–3.5.7.10–13 M4 च( D11 त्वं; D12 ∗ ) यथासुखं( B1 °क्रमं [ m. °सुखं ]; B3 °सुतं; B4 °स्वयं ) ( for सलिलक्रियाम् ). —$^{d}$ ) T3 स्वर् ; Ck.t as in text ( for स्वं ). Cg.k.t गम्यतां (as in text) Ś1 D1–3 5 7.11.12 स्वगृहं गम्यतामिति; Ñ2 V B D10.13 स्व( V4 द्यु )र्लोकं नर( V3 मुनि )पुंगव; D9 स्वर्गलोकं च गम्यतां.

16 $^{ab}$ ) Ś1 D5.12 लोकेशः ( for देवेशः ). Ñ2 V B D10.13 इत्युक्त्वा भगवान्ब्रह्मा भगीरथमरिंदमं( B1 D13 °मः ). —$^{cd}$ ) ❀ Ct : यथा आगतमिति च्छेदः । ❀ Ś1 D5.12 जगामाथ; D1–3.7.11 जगामाशु; T2.3 G4 यथागच्छद्; G2 M1 तदागच्छद्; Cg as in text ( for तथागच्छद् ). D1–3.7.11 ब्रह्मलोकं. Ś1 D5 ब्रह्मलोके( D5 °कं ) पितामहः; D12 ब्रह्मा लोकपितामहः ( for $^{d}$ ). Ñ2 V B D10.13 जगाम सहितो देवैर्ब्रह्मलोकमनामयं; M4 जगामाशु ∗तो ब्रह्मा लोकं पुण्यं महायशाः.

G 1 60 5 B 1 58 4 L 1 54 5 अशक्यमिति चोवाच वसिष्ठो भगवानृषिः ।
नं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४
बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः ।
याजने भगवाञ्शक्तस्त्रैलोक्यस्यापि पार्थिव ॥ ५
तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् ।
स राजा पुनरेवैतानिदं वचनमब्रवीत् ॥ ६
प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ।
अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ॥ ७
ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ।
शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ।
एवमुक्त्वा महात्मानो विविशुस्ते स्वमाश्रमम् ॥ ८
अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ।
नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ।
चित्यमाल्यानुलेपश्च आयसाभरणोऽभवत् ॥ ९

ने तस्य; D13 न ते क्षमं तु तत्तस्य. —$^{d}$) T2 सत्यवादिनं (for °वादिनः) Ñ V B D10.11.13 M4 वचोतिक्रम्य वर्तितुं.

4 $^{a}$) Ñ V1.3.4 B D10.11 13 यत्प्राह; V2 यच्चाह; Dt D6 8 सो°; D2 वो°; D14 T1 M2 हो°; G2 को°; Cm.t as in text (for चोवाच). —$^{cd}$) D14 damaged for हर्तुं क्र. Ś1 D1–3.5.7.12 तमद्य वयमासाद्य (for $^{c}$). Ś1 D1–3.5.7.9 M4 कथं शक्ताः क्रतुं (by transp.) Dt D6.8 T (T2 also as in text) M2 च न (for तव). Ñ V B D10.11.13 तदस्माभिः (V2 °कं) कथं शक्यं कर्तुमद्य (V4 °र्तुमस्य, D13 °र्तुं राजन्) बलादिव (V4 °षु; D11 °ह).

5 $^{a}$) Ñ V1–3 B2 4 D10.11.13 °शोसि; V4 त्रिद्रितोस्मि (for बालिशस्त्वं) Ś1 D5 नृप°; Ñ V1.3.4 B2–4 D10.13 सुमंदात्मन; V2 सुनंदात्मन्; D11 सुमंराजन् (sic) (for नरश्रेष्ठ). B1 बालिशो वासि मंदात्मन्. —$^{b}$) Ś1 D1–3.5.7.12 गुरुपुत्रान्य इच्छसि. —$^{cd}$) V2 योजने (sic). Ñ V B D10.11 13 भगवानेव (for भगवाञ्शक्तस्). —Ñ1 damaged from $^{d}$ up to second syllable in 6$^{d}$. Cm.k.t त्रैलोक्यस्यापि (as in text). Ñ2 V B D10 13 शक्तोस्मै न (V1 °न च) वयं हि ते; D11 वसिष्ठो याजको हि ते (for $^{d}$). Ś1 D1–3.5.7 12 त्वोरतांश्चालयितुं गम्यतामिष्टतो नृप (D2 3.7 व्रज). —After 5, Dt D4.6 8 9.14 S (except M4) Cg.k.t ins.:

1108* अवमानं कथं कर्तुं तस्य शक्ष्यामहे वयम् ।

[D9 T1.2 G2.4 M1.2 वय, D14 मया (for कथ). D9.14 T1.2 G2.4 M1.2 कथ (for वयम).]

6 Ñ1 damaged up to second syllable in $^{d}$ (cf. v.l. 5). —$^{a}$) V3 स तेषां; D1 तेभ्यस्तद्; M4 तेषां तु (for तेषां तद्). —$^{b}$) Ś1 D5 12 स्नेह- (for क्रोध-). Ñ2 V B D10.11 -व्याकुलिताक्षरं (V4 °धरः); D1–3.7 M4 -पर्याकुलेक्षणः (D2 3 7 °णं). —$^{c}$) T3 राजा तु (for स राजा). Ck.t एतान् (as in text). Ś1 Ñ (Ñ1 damaged) V B D2 3 5.7.10–13 M4 राजा मन्युसमाविष्टो (M4 °ष्ट); D1 (marg. as in Ś1 also) स राजन्य(:) समाचष्टे. —$^{d}$) Ś1 D1–3.5.7 12 गुरुपुत्रान (D1 °त्रांस्त) थाब्रवीत्; Ñ V B D10.11.13 M4 -मुनि (Ñ1 damaged; M4 ऋषिः) पुत्रानुवाच तान् (V3 M4 ह).

7 $^{a}$) Ś1 Ñ V B D1–3.5.7.10–13 वसिष्ठेन; Dt D4.6.8.9 T2 G1–3 M1.3 भगवता (for ऽस्मि गुरुणा). —$^{b}$) Dt D6.8 हि; D2 om. (submetric) (for च). Ñ V B D10 11.13 भवद्भिस्तदनंतरं. —$^{c}$) D9 समीक्ष्यामि. —$^{d}$) Ñ V B D10 13 यष्टुं विदितमस्तु वः.

8 $^{a}$) Ś1 D1–3.5 7 12 वसिष्ठपुत्रास्; V3.4 °पुत्रस्तु (sic); B4 °पुत्राश्च; M2 गुरु° (for ऋषिपुत्रास्तु). B3 तं (for तच्). —$^{b}$) M3 वाचं (for वाक्यं) T2 M2 -संयुतं; M3 -संहितां; Cv.r m.g.t as in text (for -संहितम्). Ś1 D5 12 वाक्यं घोराक्षरं तदा; Ñ V B D10.11 घोरा (D10 11 क्रोधा) क्षरप (Ñ2 V2 B1 3 4 D10 °मि) दं वचः; D13 क्रोधपर्याकुलाक्षरं. —$^{c}$) Ś1 Ñ V B D1–3.5.7.9–13 शेपुस्तं (Ñ1 V1.2 B1 D1 °स्ते) परम (Ñ V B D10.11 नृपतिं) क्रुद्धाश्. —$^{d}$) D9 G1 3 चांडालत्वं. Ś1 B4 D1–3 5.7 11–13 M4 चं (B4 D1 2 7 11 चां) डालस्त्वं भविष्यसि; Ñ V B1–3 D10 चं (V2–4 B1.3 चां) डालः श्वो (B3 marg. also त्वं) भविष्यसि. —$^{e}$) Dt D6.8 इत्युक्त्वा ते (for एवमुक्त्वा). Ś1 D1–3.5.7.12 इत्येवमुक्त्वा राजानं; Ñ2 V B D10 13 इति शप्त्वा च (V3 B1.4 D13 तु) राजानं; M4 शप्त्वा चैव त्रिशंकुं ते. —Ñ1 damaged from $^{f}$ up to l. 1 of 1110*. —$^{f}$) Dt D6.8 स्वं (for ते). M4 विविशुः पुनराश्रमं. —After 8, Ś1 D14 (both in marg) T3 (after 8$^{cd}$) ins.

1109* तच्छ्रुत्वा घोरसंकाशं गुरु (Ś1 ऋषि) पुत्रैश्च भाषितम् ।
प्राविशत्स्वपुरं राजा चिन्तयामास दुःखितः ।

9 $^{a}$) D1 2 अर्ध- (for अथ). D12 अ॰ रात्रे (sic) (for अथ रात्र्यां). —$^{b}$) G1.3 चंडाळतां. Ś1 D1–3 5 7 12 चां (Ś1 D12 च) डालदर्शनः (D2.7 °नं; D5 °न). —D14 damaged for स्त्रधरो in $^{c}$. —$^{d}$) T2 G M1.3 पुरुषो. D9 नीलकेशो महाहनुः. —$^{e}$) D14 T1 3 G4 चित्र-; Cr.m g.k as in text (for चित्य-). Ś1 D1–3 5 7.12 विचित्रमाल्याभरण, Dt D6.8.9 T2 G1 M2 3 चित्र (Dt D6.8 °त्य as in text) माल्यांगरागश्च; ❀ Cv चित्यमाल्यानुलेपश्चेति सम्यक पाठः । ❀—Note hiatus between $^{e}$ and $^{f}$. —$^{f}$) G1.3 ह्यायसाभरणो (to avoid hiatus). Ś1 D1–3 5.7.12 -भरणस्तथा (D3.7 °दा); D4 -भरणान्वितः. —For 9, Ñ V B D10.11.13 M4 subst.; Ś1 D1–3 5.7.12 subst. l. 3 only for 9$^{cd}$:

1110* अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव सः ।
चाण्डालदर्शनो राम सद्य एव दुराकृतिः ।

तं दृष्ट्वा मन्त्रिणः सर्वे त्यक्त्वा चण्डालरूपिणम् ।
प्राद्रवन्सहिता राम पौरा येऽस्यानुगामिनः ॥ १०
एको हि राजा काकुत्स्थ जगाम परमात्मवान् ।
दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् ॥ ११
विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ।
चण्डालरूपिणं राम मुनिः कारुण्यमागतः ॥ १२
कारुण्यात्स महातेजा वाक्यं परमधार्मिकः ।
इदं जगाद भद्रं ते राजानं घोरदर्शनम् ॥ १३
किमागमनकार्यं ते राजपुत्र महाबल ।
अयोध्याधिपते वीर शापाच्चण्डालतां गतः ॥ १४ G. 1.60.18 B. 1.58.16 L. 1.54.18

अथो नीलाम्बरधरो रक्ताम्बरकृतोत्तर· ।
सरब्धनाम्रघोराक्षः करालो हरिपिङ्गलः ।
ऋक्षचर्मनिवासी च लोहाभरणभूषित. ।

[ (l. 1) Ñ1 damaged (cf v l 8). D13 रात्रो. M4 रत्या (sic) (for राज्या). V4 व्य ·· या. B4 अनीताया (for व्यतीताया). V4 व्यजायत (for बभूव स). —(l 2) Ñ2 V1 B2 D10 13 M4 चंडाल- (for चाण्डाल-). M4 -सदृशो (for -दर्शनो). —(l. 3) Ñ2 V3 B3 (marg. also as above) D10 -वरोत्तर (for -कृतोत्तर·) M4 नीलपीतांबरधरो रक्तनात्यविभूषण: —(l. 4) Ñ1 V1 4 B2 सरब्धस, B3 (marg as in M4 also) सरब्धा, D11 सरभात्; M4 सरक्त- (for सरब्ध-). D11 -नयन· (for -घोराक्ष). M4 कराल· (for °लो). B1 भूरि-, M4 एरि- (for हरि-) ☞ In V3, as the fol. seems to have been misplaced in the original MS. the lines from the post. half of l. 4 (repeated) up to st. 20 are found in Sarga 12 between $3^c$ and $3^d$. —(l. 5) V4 -समाधाय (for -निवासी च). V2-4 लौहाभ(V4 °ह)रण- ]

**10** $^a$) Ñ V B D10 11 13 **सचिवा**(V3 °**व**)**स्तस्य** (for **मन्त्रिणः सर्वे**). —$^b$) Ś1 D1-3 5 7 9.12 M4 **साक्षाच्**, Ñ V B D10.11.13 **सद्यश्**; Dt D6.8 14 T1.3 G4 M2 Cm.t **त्यज्य** (for **त्यक्त्वा**). D9 **चांडाल-** (for **चण्डाल-**). M4 **-दर्शनं** (for **-रूपिणम्**). Ś1 Ñ V B D1-3 5.7 10-13 **चां**(Ś1 Ñ V1 B2 D3.10.13 **चं**)**डालतां गतं**(V4 °**त:**) —Ñ1 damaged from **म** in $^c$ up to **जगा** in $11^b$, V1 damaged from **म** up to **स्यानु** in $^d$. —$^c$) Ś1 Ñ V B D1-3 5 7 10-13 M4 **दुद्रुवुः**(M4 **प्राद्रवन्**) **स्वपुरं**, D14 damaged (for **प्राद्रवन्सहिता**). —$^d$) M3 **वर्या** (for **पौरा**). D4 T2 **यस्य**; T3 G1 3 **तस्य**; G4 **येन्या** (for **येऽस्य**) Ś1 Ñ2 V2-4 B D1-3 5 7 10-13 **पौरा ये चा**(V2 **ता**)**नुयायिन·**; M4 **ये च तस्यानुगामिनः**.

**11** Ñ1 damaged up to **जगा** (cf. v l 10). D2 om. $11^{ab}$. —$^a$) M4 **तु** (for **हि**). Ś1 D3 5 7.12 **अथैक एव राजा स**; Ñ2 V B D1.10.11 13 **एक एव ततो राजा**. —$^b$) Ś1 D1.12 **परमात्सवान्**; Ñ V1 3.4 B(B4 m. also [**आ**]**कुलमानसः**) D10.11.13 [**आ**]**कुलचेतनः**; V2 [**आ**]**कुललोचनः**; D3.7 **वनमेव च**; M4 **पुनरात्सवान्** (for **परमात्मवान्**). —After $11^{ab}$, D3.7 ins. :

1111* **त्राहि त्राहीत्युवाचेमं शरणार्थिनमागतम् ।**
**परित्यक्तं वसिष्ठेन शप्तं चाण्डालतां गतम् ।**

[ (l 1) D7 [इ]त (for [न]त). D3 अनागत (hypermetric) (for आगतम्). ]

—D1 repeats consecutively $11^{cd}$. —$^c$) Ś1 D5 12 **दह्यमानं**; M4 **दिदृक्षुः स** (for **दह्यमानो**). Ś1 **दिवारात्रौ**; D1 (second time, first time **शुचा राम**) M3 **दिवारात्रिं**. —$^d$) Ś1 **महामुनिं** (for **तपोधनम्**). —For $11^{cd}$, Ñ V B D10 11.13 subst. :

1112* **शापजेन सुदुःखेन दह्यमानो दिवानिशम् ।**
**विश्वामित्रं महात्मानं ततः शरणमाययौ ।**
**स्पर्धमानं वसिष्ठेन शरणार्थी तपोधनम् ।**

[ (l. 1) Ñ1 दुःखेन: Ñ2 D10 स्वदुःखेन. B4 सतदुःखेन (sic); D13 स दुःखेन —(l. 2) D11 विश्वामित्रो (sic) (for °त्रं). —(l. 3) Ñ1 स्पर्धया न V2 शरणार्थं. D11 तप्यमानं (for शरणार्थी). ]

**12** G2 om (hapl ?) 12 and 13. —$^a$) D14 G4 damaged for **विश्वा**. D1 M4 **स** (for **तु**). Ñ V B D10.11 13 **विश्वामित्रोपि दृष्ट्वैव**. —$^b$) Ñ V B D10.11.13 **तु**(V2 3 B4 D11 **तं**; V4 *, B2 **च**) **तथागतं**; D3 **वि· ·कृतं**; D7 **विकलं कृतं**; D12 **विकटीकृतं**; T2 **अवरीकृतं**; all Cs as in text (for **विफलीकृतम्**). —$^c$) Ñ1 V2-4 B3 4 D2 3 7 9 10 **चांडाल-**. Ś1 D1-3.5 7.12 **घोरं**; M4 **घोर-** (for **राम**). —$^d$) Ś1 D1-3.5.7.12 **तत.**; M4 **-मुनेः** (for **मुनिः**). Ś1 D1-3 5 7 12 **ईयिवान्**; D9 **आत्मनः**; M4 **आगमत्** (for **आगतः**). Ñ V B D10.11.13 **कारुण्यं समुपागमत्** (Ñ2 V1.2 B2 D11 °**तः**).

**13** G2 om. 13 (cf. v l. 12). Ñ1 damaged from **ण्यात्स** up to **ब्रवीद्** (see variation in Ñ) in $13^c$. —$^a$) Ś1 Ñ2 V B D1-3 5.7.10 12 13 M4 °**च्च**; D11 **कारुण्यधिर्**; D14 G4 °**त्सु-** (for **कारुण्यात्स**). —$^b$) Ś1 Ñ2 V B D1-3 5 7 10-13 M4 **वाक्यविशारदः**(D3 11 °**द**) (for **परमधार्मिकः**). —$^c$) D14 om., M3 **एवं** (for **इदं**). Ś1 Ñ V B D1-3.5 7 10-13 **अ**(B4 **सो**)**ब्रवी**(V1 D2 om. **वी**)**द्**(Ñ1 damaged) **तलक्ष्मीकं**; M4 **इदमाह स धर्मात्मा**. —$^d$) Ś1 D1 **घोरदर्शिनं**; T1 G4 M3 **घोररूपिणं**.

**14** $^a$) Ś1 D5.12 **-हेतुस्**; Ñ V B D10 11.13 T3 M4 **-कृत्यं**; Ck as in text (for **-कार्यं**) —$^b$) G2 M1 2 4 °**यशः** (for **महाबल**). Ś1 Ñ V B D1-3 5.7 10-13 (with hiatus) **इक्ष्वाकुकु** (D11°*) **लनंदन**. —V4 om. (hapl. ?) $14^c$–$15^b$. —$^c$) G4 damaged from **प** up to **शा** in $^d$. V3 D11 **अयोध्याधिपते. श्चैव**(D11 °**वीर**). —$^d$) M2 3 **कस्माच्** (for **शापाच्**). V2.3 B2.4 D1-3 5.7.9.10 **चांडालतां**; G1 **चंडाळतां**. V1 **गतं**.

G. I 60 19
B. I 58 16
L. I. 54 19

अथ तद्वाक्यमाकर्ण्य राजा चण्डालतां गतः ।
अब्रवीत्प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ १५
प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ।
अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः ॥ १६
सशरीरो दिवं यायामिति मे सौम्य दर्शनम् ।
मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् ॥ १७
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
कृच्छ्रेष्वपि गतः सौम्य क्षत्रधर्मेण ते शपे ॥ १८
यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः ।
गुरवश्च महात्मानः शीलवृत्तेन तोषिताः ॥ १९
धर्मे प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः ।
परितोषं न गच्छन्ति गुरवो मुनिपुंगव ॥ २०
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ॥ २१
तस्य मे परमार्तस्य प्रसादमभिकाङ्क्षतः ।
कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः ॥ २२

---

**15** V4 om $15^{ab}$ (cf. v.l. 14). —$^{a}$) D12 अयं; T2 M3 ततस्; Cg as in text (for अथ). D4 damaged for क्यमाकर्ण्य. Ñ V (V4 om.) B D10 11 G2 M1 3 Cg आज्ञाय; D1–3 7 9 T2 G1 3 M2 4 आदाय; D4 आस्थाय (for आकर्ण्य). —$^{b}$) G चंडाळतां. Ś1 Ñ V1 2 B D1–3 5 7.9–13 M4 चां(Ñ2 V1 B1 2 D12 13 M4 चं)डालदर्शनः; V3 चापरितोषितः; M2 चंडालरूपधृक् (for चण्डालतां गतः). —D12 damaged for क्यं वाक्यज्ञो. —$^{c}$) V3 उवाच प्रांजलिर्भूत्वा —$^{d}$) Ś1 D5.12 T3 M4 -कोविदः (for °दम्) Ñ V B D10 11 13 विश्वामित्रं तपोधनं(V1 3 °निधिं).

**16** V4 om $16–17^{b}$. $16^{ab}=7^{ab}$ —$^{a}$) V2 प्रत्याख्यातो गुरुणा चाहं. —$^{b}$) Ñ1 damaged from थै up to $^{d}$ —$^{cd}$) Ś1 D5 12 अनवाप्तश्च; G2 M1 °वाप्य च (for अनवाप्यैव). D14 damaged for प्यैव तं Ś1 D1–3.5.7 12 अहं (for मया). Ś1 D1–3 5 7.12 G3 विपर्ययं, Cm g t as in text (for विपर्ययः). Ñ2 V B D10 11 13 इमं (V3 अयं) विपर्ययं(V3 °यः) प्राप्तः काममप्राप्य(D11 °प्त)कांक्षितं.

**17** V4 om $17^{ab}$ (cf. v l. 16). —$^{ab}$) V2 यामि यामि (sic), B4 प्रायामिति; D11 M2 यामि इति (with hiatus); T3 यामितिव (corrupt) (for यायामिति). Ś1 मा; D5 मां (for मे). Ś1 Ñ2 V2.3 B1 3.4 D1 4 6 8 T2 G M2 Ct सौम्यदर्शन, B2 D7 M4 सौम्य कांक्षितं; D9 सौम्य दर्शनात्; D13 सौम्य निश्चयः; Cg as in text (for सौम्य दर्शनम्) After मे D3 wrongly reads $18^{b}$ for the first time in place of सौम्य दर्शनम्; then repeats it in its proper place. —Ñ2 illeg. from $17^{c}$–18. —$^{c}$) T2 चेष्टं. Ś1 D1–3 5.7 12 मयास्योदाहृतो यज्ञस् (D5 °तं यज्ञं); Ñ1 V B D10.11.13 महायज्ञ(Ñ1 damaged for यज्ञ)फलेनेति; M4 महायज्ञक्रतुफलैस्. —$^{d}$) Ñ1 V B1–3 D10 11 नैवा°; Cm t as in text (for नावाप्यते). Ñ1 V B D10 11 M4 मया (for फलम्) Ś1 D1–3 5 7.12.13 तं च न प्राप्तवानहं; D9 तच्च न प्रापितं मया.

**18** Ñ2 illeg. 18 (cf. v l 17). —$^{a}$) Ñ1 V B D10,11.13 हि (for मे). —$^{b}$) Ś1 D5.12 भविष्यं (for च वक्ष्ये). Ñ1 V B D10 11.13 विश्वामित्र मया क्वचित्; D1–3 7 न च वक्ष्यामि किंचन. —$^{c}$) D2 4 गतं; T3 ततः (for गतः). Ñ1 V B D10.11.13 कृच्छ्रेपि वर्तमानेन. —$^{d}$) V4 यत्र (for क्षत्र-) T3 मे (for ते).

**19** V4 repeats $19^{ab}$ after $20^{b}$. —$^{ab}$) G4 इष्टुं. D1 2 5 7 11–13 M4 यज्ञैर्बहुभिरिष्टं मे (for $^{a}$). D1 5.11 पालिता. Ñ V (V1 both times) B D10 यज्ञैर्मयेष्टं बहुभिर्धर्मतः पालिता (Ñ2 B3 [marg. also] D10 °ल्यते) मही. —D2 3 7 om. (hapl.?) $19^{cd}$. Ñ1 illeg. for $19^{c}$–$20^{a}$. D1 reads $19^{cd}$ after $23^{ab}$. —$^{c}$) Ś1 °भागाः; Ñ1 V B D10.11 मया सर्वे (for महात्मानः). —$^{d}$) Ś1 -धर्मेण (for -वृत्तेन).

**20** Ñ1 illeg. $20^{a}$ (cf. v.l. 19) —$^{a}$) Ś1 D1.2.5 12 धर्मे प्रयतमानानां; B4 धर्मेण यतमानस्य. —$^{b}$) M4 धर्मं (for यज्ञं) T3 आहर्तुम् (for चा°). Ś1 Ñ V B D1–3 5 7.10–13 शुद्ध(D11 सत्य)वाग्बुद्धिकर्मणः(Ś1 D1 2 5 12 °णां; V4 °णा). —After $20^{ab}$, V4 repeats $19^{ab}$. —$^{d}$) Ś1 रिपवो (for गुरवो). Ś1 D1–3.5 7 11 12 -सत्तम(D5 12 °मा); M2 -पुंगवः (for -पुंगव).

**21** ☞ V3 missing from 21 up to I. 58. 8 (It appears that from the original MS. the folio was lost) —$^{a}$) T2 देवम्. Ś1 V1.2 4 B1 3(marg. also) 4 D1–3 5.7 11,12 अत्र, Ck as in text (for एव). M4 दैवं सर्वमहं मन्ये. —T3 transp. $^{b}$ and $^{d}$. —$^{b}$) M4 पौरुषे. Ś1 Ñ V1 2 4 B1–3 D1–3 5 7.10–13 M4 नास्ति(Ñ2 B2 3 D1–3.7.10 13 °त्र)कारणं —$^{c}$) Ś1 दैवमाक्रमते; V2 दैवादा°; B2 दैवं ना°; M4 °गम्यते(for दैवेनाक्रम्यते). Ś1 D1–3.5.7.12 बुद्धिर्; B2 सर्वैर् (for सर्वं). —$^{d}$) Cm g.k.t परमा गतिः (as in text). T3 M3 दैवमेव परा गतिः; M2 दैवं हि दुरतिक्रमं. —For $21^{cd}$, Ñ V4 B1.3 4 D10.11.13 subst., while V1 2 B2 ins after 21

1113* शुभाशुभफलप्राप्तौ नराणामिति मे मतिः ।

**22** V3 missing (cf. v.l. 21). —$^{a}$) M2 ते (for मे). V4 अर्थस्य (for आर्तस्य). —$^{b}$) Ś1 D1.3.5.7.12 मुनिपुंगव (D1 12 °वः); D2 कर्तुमर्हसि; D14 G4 अपि कांक्षतः (for अभिकाङ्क्षतः). Ñ V1 2 4 B D10 11.13 दैवोपहतकर्मणः. —$^{cd}$) D2 भद्र ते वै मुनिश्रेष्ठ(for $^{c}$). Ñ V1.2.4 B D10.11.13 शरणा(D11 °ण)गतस्य भगवन् (hypermetric) (D13 शरणार्थ प्रपन्नस्य) प्रसादं कर्तुमर्हसि.

नान्यां गतिं गमिष्यामि नान्यः शरणमस्ति मे । दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २३

इति श्रीरामायणे बालकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

## ५८

उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः ।
अब्रवीन्मधुरं वाक्यं साक्षाच्चण्डालरूपिणम् ॥ १
इक्ष्वाको स्वागतं वत्स जानामि त्वां सुधार्मिकम् ।
शरणं ते भविष्यामि मा भैषीर्नृपपुंगव ॥ २
अहमामन्त्रये सर्वान्महर्षीन्पुण्यकर्मणः ।
यज्ञसाह्यकरान्राजंस्ततो यक्ष्यसि निर्वृतः ॥ ३ G. I. 61. 3 B. I. 59. 3 L. I. 55. 3

**23** V3 missing (cf. v.l. 21). —[a]) Ś1 D5.11.12 नान्यं (for नान्यां) Ś1 D5 उपास्यामि; Ñ V1.2.4 B1–3 D1–3.7.10.12.13 प्रपश्यामि; D11 प्रयस्यामि (sic), D14 ग... (damaged) (for गमिष्यामि). —[b]) Dt D2.3.6.8 M4 नान्यच्च; D7 नान्यं (for नान्यः). Ñ V1.2.4 B D10.13 शरणन्नोस्ति (V4 °हि); D7 तरणमस्ति (for शरणमस्ति). V4 नः (for मे). —After 23[ab], D1 reads 19[cd]. —G2 om. 23[cd]. —[d]) D2 को निवर्तितुमर्हति. —After 23[cd], Ś1 D5.11.12 ins.:

1114* दावानलोपद्रुतपत्रसघो
यथा तरुर्हर्षमुपैति दृष्ट्वा ।
वर्षासु मेघं तडिदुज्वलाङ्गं
तथा ऋषिं प्राप्य नृपस्त्रिशङ्कुः ।

[(l. 1) D11 -सर्वपत्रो (for -पत्रसघो). —(l. 2) D11 हर्षयेति (submetric) (for हर्षमुपैति). —(l. 3) D5 उज्वल यथा (for उज्वलाङ्ग). —(l. 4) D11.12 नृप त्रियाकु (sic).]

Colophon. V3 om. —*Kāṇḍa name*: Ś1 Ñ2 V1.4 D4 om., V2 B D10.11 आदि°; D1.3 अयोध्या°. —After Kāṇḍa name, B4 ins. बालचरिते. —*Sarga name* Ś1 D1–3.5.7.11.12 त्रिशंकुशा(D7 °ता)पो; Ñ1 V4 B1.2 शतानंदवाक्ये(Ñ1 °क्यं) त्रिशंकुवाक्यं; Ñ2 V1 B3.4 त्रिशंकुवाक्यं; V2 त्रिशंकुचरितं; D10 त्रिशंकुवाक्यं तृतीये हि वर्तमानकथा समाप्ता. —*Sarga no.* (figures words or both). Ñ1 V1.4 B1.4 D3.5.10.11 om., Ñ2 B2.3 60, V2 D9 61; Dt D4.6.8.12.14 S (except M4) 58, D1 43, D2 41, D7 44, M4 56. D13 इत्यार्षे—सर्गे—कांडे—वाक्यं नाम 59. —After colophon, T2 concludes with रामाय नमः; G1.2.4 श्रीरामाय नमः; G3 श्रीमते रामानुजाय नमः; M2 श्री......नमः.

**58**

Ñ1 V1.3.4 B1.4 D3.5.10.11 continue the previous Sarga.

**1** V3 om. 1–8 (cf. v.l. I. 57. 21). —[a]) T1 हि (for तु). D14 ...क्यं तु; M4 तमुक्तवंतं (for उक्तवाक्यं तु). —G2 M1 transp. [b] and [d]. —[b]) Ś1 Ñ V1.2.4 B D1–3.5.7.9–13 M4 विश्वामित्रो महामुनिः(M4 °यशाः). —[d]) Dt D6.8 चंडालतां गतं. Ś1 Ñ V1.2.4 B D1–3.5.7.9–13 त्रिशंकोर् (B2 D2.3.7.9.13 °कुं) हर्षवर्धनं.

**2** V3 om. 2 (cf. v.l. 1). —[a]) B2 (m. also) त्रिशंको; D1.3.7.9.14 ऐक्ष्वाको; T1 G1.3.4 Cg ऐक्ष्वाक. Ś1 D1–3.5.7.9.12 T2 G1–3 M1 तस्तु; M4 तात (for वत्स). —[b]) Ñ2 स्वधार्मिकं; D14 सुधा.... —[c]) D14 damaged for शरणं. V4 तेहं (hypermetric) (for ते). Dt D6.8 G1–3 M1 प्रदास्यामि. —[d]) Ś1 Ñ1 V1.2.4 B1.2.4 D2.3.5.7.10–12 वसेह; Ñ2 B3 (m. also वसंत) D13 वत्स्यसि, D1 वरोस्तु (for मा भैषीर्). Ś1 D5 नृपसत्तम; Ñ V1.2.4 B D10.11.13 त्वं ममाश्रमे(V2.4 °मे); D12 नृपनंदन; T3 मुनिपुंगव(for नृपपुंगव).

**3** V3 om. 3 (cf. v.l. 1). —[a]) M4 यावद् (for अहम्). —[b]) Ś1 ऋषीन्परमधार्मिकान्; D1–3.5.7.9.12 ऋषीन्धर्मपरायणान् (D12 °यण); M4 ऋषीन्वै पुण्यकर्मिणः. —[c]) Ś1 D1–3.5.7.10 °साहाय्यकरान्. —[d]) D12 यक्ष्यामि; M4 यष्टासि (for यक्ष्यसि). D14 damaged for निर्वृतः. D1 ततो यज्ञमुसंभृतः. —For 3[cd], D9 subst.

1115* सर्वविज्ञानसंपन्नान्यज्ञसाहाय्यकारिणः ।
इन्द्रादिदेवताः सर्वास्ततो यक्ष्यामि निर्वृतः ।

—For 3, Ñ V1.2.4 B D10.11.13 subst.:

G. 1. 61. 4
B. 1. 59. 4
L. 1. 55. 4

गुरुशापकृतं रूपं यदिदं त्वयि वर्तते ।
अनेन सह रूपेण सशरीरो गमिष्यसि ॥ ४
हस्तप्राप्तमहं मन्ये स्वर्गं तव नरेश्वर ।
यस्त्वं कौशिकमागम्य शरण्यं शरणं गतः ॥ ५
एवमुक्त्वा महातेजाः पुत्रान्परमधार्मिकान् ।
व्यादिदेश महाप्राज्ञान्यज्ञसंभारकारणात् ॥ ६
सर्वाञ्शिष्यान्समाहूय वाक्यमेतदुवाच ह ॥ ७
सर्वानृषिवरान्वत्सा आनयध्वं ममाज्ञया ।
सशिष्यान्सुहृदश्चैव सर्त्विजः सुबहुश्रुतान् ॥ ८
यदन्यो वचनं ब्रूयान्मद्वाक्यबलचोदितः ।
तत्सर्वमखिलेनोक्तं ममाख्येयमनादृतम् ॥ ९

---

1116* सर्वानामन्त्रयिष्येऽहं त्वत्कृतेऽत्र तपोधनान् ।
काङ्क्षितस्यास्य ते राजन्सिद्ध्ये यज्ञकर्मणि ।

[ (l. 1) Ñ1 V1 D11 त्वत्कृते तु, V2.4 B1 त्वत्कृतेन, B2 त्वत्कृते वै. —(l. 2) B1.2 D10 यज्ञकर्मण. ]

4 V3 om. 4 (cf. v.l. 1). —$^{a}$) D14 ·· (for गुरु-). V2.4 M4 गुरुगापहृतं (M4 °कृतं) T3 शापं (sic) (for रूपं). D1–3.7.9 गुरुशापकृ(D9 °पात्कृ)तो दोषो —$^{b}$) D1 यदेष; D2.3.7.9 य एष (for यदिदं). Ñ V1.2.4 B (B3 m. also) D10.13 य(V4 त)देतद्(Ñ2 B3 D10.13 °दिदं) धार्यते त्वया. —$^{c}$) Ś1 D1–3.5.7.9.12 G2 M1 अनेनैव च (G2 M1 हि), D4 अनेन स्वस्व-; D11 त्वमनेनैव; G1.3 अनेन चेह (for अनेन सह). —For $4^{cd}$, Ñ V1.2.4 B D10.13 subst.

1117* संसिद्धस्त्वमनेनैव रूपेण स्वर्गमेष्यसि ।

[ V2 सु- (for स-). Ñ1 V2 B2.4 स्वर्गमिष्यसि. ]

5 V3 om. 5 (cf. v.l. 1). —$^{ab}$) D1 (m. also) हस्तलभ्यम् ; D3.14 T1 Cm °प्राप्यम् ; D5.11.12 °मात्रम् (for हस्तप्राप्तम्). Ś1 स्वर्गे. D2.7 स्वर्गं तव मन्ये (by transp.). Ñ V1.2.4 B D10.11.13 ते नृपसत्तम. Dt D2.4.6.8.9.14 T G4 M3 तव नराधिप. —$^{c}$) D1–3.7.9.13.14 T1 G4 यत् ; Cg.k.t as in text (for यस्). Ś1 D1–3.5.7.9.12 कौशिकमाज्ञाय; Ñ V1.2.4 B D10.11 मामभ्युपा°; D13 मां समुपा°; D14 damaged (for कौशिकमागम्य). —$^{d}$) Dt D8.14 T M2.4 शरणागतः. Ñ V1.2.4 B D10.11.13 त्रिदिवं गंतुमिच्छसि (Ñ2 V1.2.4 B3.4 D10 °मर्हसि).

6 V3 om. 6 (cf. v.l. 1). —$^{b}$) D4 T3 -धार्मिकः. Ś1 D1–3.5.7.9.12 विश्वामित्रो महातपाः(Ś1 °मुनिः; D5 °त्मना: [sic]; D12 °मनाः). —After $6^{ab}$, Ś1 (repeats $8^{cd}$ in its proper place) D1–3.5.7.9.12 M4 read $8^{cd}$. —$^{c}$) M3.4 महाप्राज्ञो. Ś1 D1–3.5.7.9.12 अनोद्(D1.9 अरोच; D2 स रोच) यन्महाप्राज्ञो(Ś1 °तेजा; D12 °·· ) —$^{d}$) Ś1 -कारणं, D14 -का·· .

7 V3 om. 7 (cf. v.l. 1). —$^{a}$) D14 damaged for सर्वाञ्शि. M4 समानीय. Ś1 D1–3.5.7.9.12 शिष्यांश्च सर्वानाहूय (Ś1 °नाय्य) —$^{b}$) G4 चेदम् (for एतद्). Ś1 D1–3.5.7.9.12 G2 M1.2.4 वाक्यज्ञो वाक्यमब्रवीत्.

8 V3 om. 8 (cf. v.l. 1). Ś1 reads 8; B2 $8^{ab}$ in marg. —$^{a}$) D14 T1 G4 -गणान् (for -वरान्). D4 T3 साधून् (for वत्सा) Ś1 Dt D6.8 सर्वानृषीन्सवासिष्ठान्; G1–3 M1.2 वत्साः सर्वानृषिवरान् (by transp.) —$^{b}$) T2 आनयंतु —For $8^{ab}$, D1–3.5.7.9.12 subst., while Ś1 ins. after 8

1118* गत्वा मुनिवरान्सर्वान्समानयत सत्वरम् ।

[ D9 om. (hapl.?) सर्वान्. D9 तत्त्वतः (for सत्वरम्). ]

—Ś1 repeats here (cf. v.l. 6), D1–3.5.7.9.12 M4 read $8^{cd}$ after $6^{ab}$. —$^{c}$) Ś1 (first time) D1–3.5.7.9.12 M4 शिष्यांश्च. D14 T1 सशिष्यसुहृदश्चैव; G2 °न्सुहृदर्थश्च; M2 शिष्यान्ससु°. —$^{d}$) G1.3 शतशः (for सर्त्विजः). Ś1 (second time) D4.14 T G4 M2.3 स(T2 M3 तु)बहु-; Ct as in text (for सुबहु-) Ś1 (first time) D1–3.5.7.9.12 M4 ऋत्विजः सपुरोधस(D9 °हितः; M4 °हितान्). —For 6–8, Ñ V1.2.4 B D10.11.13 subst..

1119* एवमुक्त्वा महातेजाः पुत्रानाहूय सर्वशः ।
शिष्यांश्च सुहृदश्चान्यानुवाचेदं वचस्तदा ।
आनयध्वमिह क्षिप्रं यज्ञद्रव्याण्यशेषतः ।
मदीयेनैव यज्ञोऽयं द्रव्येणास्य भविष्यति ।
शिष्यानुवाच चाहूय सर्वानेव तदा वचः । [5]
सर्वानृषीनानयध्वं समुपेत्याज्ञया मम ।

[ (l. 1) D11 विश्वामित्रो महात्मन (for the post. half). —(l. 2) B1 वचोऽर्थवत्. —(l. 3) B4 [अ]नेकशः (for [अ]शेषतः). —(l. 5) V4 नाहूय (sic), B2 marg., B4 ·हूय (for चाहूय). —(l. 6) Ñ1 B1 समुत्पत्य (for °पेत्य). ]

9 $^{a}$) Ś1 Ñ V1–3 B D1–3.5.7.10–13 M4 यश्च यद् (D7 तद्) (for यदन्यो) V4 यश्च यत्त्वं वचो. —$^{b}$) D12 ·द्वाक्य-. Ś1 D1–3.7.12 -परिनोदितः; D5 -परितोषितः; M4 -प्रति°; Cm.g.k as in text (for -बलचोदितः). Ñ V B D10.11.13 मम (Ñ1 मद् [submetric]) वाक्यप्रचोदितः (V2 D11 °देशितः). —$^{c}$) D1 °लोक्तं च, D2.3.7 °लेनेह (for अखिलेनोक्तं). —$^{d}$) D7.12 समाख्येयं (for ममाख्येयम्) Ś1 विनादृतं; D1–3.5.7.12 विनानृतात् (D5.12 ° तं), D9 (before corr.) T1 M4 अनावृतं; Cv.r.m.g.t as in text (for अनादृतम्). —For $9^{cd}$, Ñ V B D10.11.13 subst.

1120* तन्मे भवद्भिरावेद्यं यथाप्रोक्तमशेषतः ।

[ D10 आनेय (for आवेद्यं). ]

तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया ।
आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः ॥ १०

ते च शिष्याः समागम्य मुनिं ज्वलिततेजसम् ।
ऊचुश्च वचनं सर्वे सर्वेषां ब्रह्मवादिनाम् ॥ ११

श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः ।
सर्वदेशेषु चागच्छन्वर्जयित्वा महोदयम् ॥ १२

वासिष्ठं तच्छतं सर्वं क्रोधपर्याकुलाक्षरम् ।
यदाह वचनं सर्वं शृणु त्वं मुनिपुंगव ॥ १३

क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ १४

ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ।
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥ १५

एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ।
वासिष्ठा मुनिशार्दूल सर्वे ते समहोदयाः ॥ १६

G. I 61 16
B. I 59 16
L. I 55 16

**10** $^a$) Ś1 D1–3 5.12 ततस् (for तस्य). D2 तद्वच॰. Ñ V B D10 13 शिष्यास्ततोस्य ते जग्मुर्. —$^b$) Ñ V B D10.13 सर्वैं (V2 D13 °र्वास्) (for जग्मुम्). Ś1 D1–3 5 7 11 12 पृथक्पृथक्; M4 अथाज्ञया —$^d$) D7 om. (hapl.?) from ब्रह्म up to सर्वेषां in 11$^d$.

**11** D7 om 11 up to सर्वेषां (cf v l. 10). —$^a$) Ś1 D5 12 G2 M1.2 तु; D9 स्व- (for च) —$^b$) Ś1 D1.2.5.12 ज्वलन- (for ज्वलित-). —$^c$) Ś1 D2 3 5 12 अब्रुवन्; D1 अब्रवीद् (sic) (for ऊचुश्च). G2 [आ]गमनं; M1 गमनं (for वचनं). Dt D6 T2 G2 M1 3 सर्वं; M4 सम्यक् (for सर्वे). —M3 wrongly reads 13$^b$ for 11$^d$ written in marg. —$^d$) Ś1 D1–3.5 7 12 यथोक्तं (D7 om.) ब्रह्मवादिभिः.

**12** $^{ab}$) T2 तु; T3 तद्; Ck as in text (for ते). M3 यदा श्रुत्वा तु वचनं (for $^a$). D11 समाया*. M4 श्रुत्वा वचनमस्माकमाजग्मुर्वै तपस्विनः. —For 10$^c$–12$^b$, Ñ V B D10.11 (for 10$^c$–11).13 subst :

1121* आमन्त्र्य चाप्युपावृत्ता नचिरेण तपोधनान् ।
ऊचुः प्राञ्जलयोऽभ्येत्य विश्वामित्रमिदं वचः ।
तवोपामन्त्रिताः सर्वे मुनयोऽस्माभिराज्ञया ।
आज्ञा प्रतिगृहीता तैः सर्वैरेव तपोधनैः ।

[V1 om. l. 1 —(l. 1) B1.3 (m. also) [अ]भि- (for [अ]पि). D11 अचिरेण. D13 तपोधनाः. —(l. 2) V4 तेचुः (sic), D13 प्रोचुः (for ऊचुः). V2 [ऽ]त्रैत्य (for ऽभ्येत्य). —(l. 3) V1 * * * मन्त्रिता, V2 तथैवा°, V4 अथोपामंत्र्य ते, B4 ततोप°, D11 ततोवापाम° (sic), D13 तव चा° (for तवोपामन्त्रिता). V4 मुनयश्च तवाज्ञया; D11 मुनयोस्मा * * ज्ञया (for the post. half). —After l. 3, V4 erroneously repeats l. 1 and 3. —(l. 4) V4 प्रतिगृहीतैस्; D11 हीति गृहीता.]

—$^c$) G2 -देवेषु (sic) (for -देशेषु). Ś1 D1–3 5.7.11 12 भगवन्सर्वदेशे(D3 11 °वे [sic])भ्यो; Ñ V B D10 13 अस्माभिरुक्तैरभ्येत्य (V4 °न्यैश्च); M4 ऋषयः सर्वदेशेभ्यो.

**13** $^a$) D9 वासिष्ठैस्. Ś1 D1–3.5.7.12 M4 च शतं; Dt D4.9 त(Dt य)च्छुतं; D6.8 Ct यच्छतं (for तच्छतं). Ś1 D5.12 सर्वैं (for सर्वं). M3 वासिष्ठानां शतं सर्वं. —Ś1 D5.12 om. (hapl?) 13$^{bc}$. —$^b$) M3 repeats $^b$ (cf. v.l. 11). D1–3 7 [ई]क्षणं (for [अ]क्षरम्). —For 13$^{ab}$, Ñ V B D10 11 13 subst

1122* वसिष्ठस्य च पुत्राणां शतं क्रोधसमाकुलम् ।

[V3 वच॰ (hypermetric), D11 om. (submetric) (for च)]

—$^c$) Dt D6 8 यथा (for यद्). D1.3 7 अब्रवीद्वचः; D2 अब्रुवन्वचः; D9 आहुर्वचनं (for आह वचनं) M4 तत्त्वं (for सर्वं) Ñ V B D10 11 13 यदुवाच वचो(D10 ततो) घोरं. —$^d$) Ś1 Ñ V B D1–3 7 10–13 M2 शृणु तन्; D5 शृणु तान्; T2 शृणुध्वं; M3.4 शृणुष्व. V4 मुनिसत्तम.

**14** $^{ab}$) D1 याज्ञिको; D12 याजः (for याजको). Ñ V B D3.7.10.11 13 यत्र; D1 यश्च; T3 चैव (for यस्य). V2 4 B3.4 D1 2 7.9–11 चांडालस्य(D1 7 °श्च); D3 चंडालश्च. Ñ V1.3 4 B1–3 D13 यियक्षतः; V2 B3 (m. also).4 D11 [अ]पि यक्षतः; D3.7 यियक्ष्यति; D10 [अ]पि यत्कृतः (for विशेषतः). Cm as in text (for $^b$). D1 (marg. also) चांडालो यत्र वै यष्टा अध्वर्युः क्षत्रियस्तथा. —$^c$) Ñ V B D10.11 13 भोक्ष्यंते (for भोक्तारो). —$^d$) Ś1 Ñ V B D1–3.5 7.9–13 तत्र; Cg as in text (for तस्य). Ñ V B D10.11.13 सुरोत्तमाः; D1–3.7 T2 M3 4 °भाः (for सुरर्षयः).

**15** D11 om. (hapl) 15. —$^a$) Ś1 D5.12 हि; B2 (m. also as in text) ये; D1 वो (for वा) D13 वाचमात्मानो (sic) (for वा महात्मानो). —$^b$) Ñ V B3.4 Dt D1–3 5.7–9 G1 चांडाल-. G2 -कोपनं (for -भोजनम्). —$^c$) D14 गमिष्यामि (sic). —$^d$) Ś1 Ñ V2–4 B D5.10.12.13 पातिताः; V1 याजिताः; D2.3.7.9 पाविताः; Cm.g k t as in text (for पालिताः).

**16** $^a$) Ñ V B D10.11.13 निष्ठुरं (V1 B4 °र) वचनं प्राहुर्. —$^b$) Ś1 D1–3.5.7 12 कृतं; Ñ1 V B1.2.4 D11 एतत्; Ñ2 B3 D10.13 एते (for ऊचुः). Ś1 D5.12 रक्तविलोचनैः; V4 सं*क्तलोचनाः; D1–3.7 सं(D3 *)रक्तलोचनैः. —B3 reads 16$^c$–17 in marg. —$^c$) Ś1 D1–3.5 7.12 वा(D3 च)सिष्ठैर्; V1.4 D11 वसिष्ठा. Ś1 Ñ2 D1–3.5.7.10.12.13 नरशार्दूल (Ś1 °लैः). —$^d$) V1 ते सुमहोदयाः; V4 ते महदोदयाः; Dt D4.9 T3 G2 M1.2 4 सहमहोदयाः; Cm.g.k.t as in text (for ते समहोदयाः). Ś1 D1–3.5.7.12 सर्वैः सह महो(D3 °नो)दयैः.

G. 1 61 17 B. 1 59. 16 L. 1. 55 17

तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुंगवः ।
क्रोधसंरक्तनयनः सरोषमिदमब्रवीत् ॥ १७
यद्दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ।
भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ॥ १८
अद्य ते कालपाशेन नीता वैवस्वतक्षयम् ।
सप्तजातिशतान्येव मृतपाः सन्तु सर्वशः ॥ १९
श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ।
विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् ॥ २०
महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ।
दूषितः सर्वलोकेषु निषादत्वं गमिष्यति ॥ २१
प्राणातिपातनिरतो निरनुक्रोशतां गतः ।
दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति ॥ २२
एतावदुक्त्वा वचनं विश्वामित्रो महातपाः ।
विरराम महातेजा ऋषिमध्ये महामुनिः ॥ २३

इति श्रीरामायणे बालकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

17 B3 reads 17 in marg. (cf. v.l. 16) —[a]) D4 एषां; D8 येषां (sic) (for तेषां) M4 तु (for तद्). Ñ V B D10.11.13 इति तेषां वचः श्रुत्वा. —[b]) Ś1 D1–3.5.7.12 यथोक्तं; Ñ V B D10.11.13 शिष्याणां (for सर्वेषां) —[c]) Ś1 D1.3.7 क्रोधात्सं° (D3 °*), G1–3 M1 कोपसं°. —D2 om. 17[d]–18[c]. —[d]) Ñ V B D3.7.10.11.13 G1.3 इदं वचनम् (for सरोषमिदम्).

18 D2 om. 18[abc] (cf. v.l. 17). —[a]) Ś1 V1 D1.3.5.7.9.10.12.13 G1.3 M3.4 Cg ये; Ct as in text (for यद्) Dt दू*यंति; D10 दुष्टयंति. —[b]) Ś1 D3.5.7.12 उपागतं; D1 उपागमत् (for समास्थितम्). Ñ V B D10.11.13 वा(D11 व)सिष्ठा (V2 वसिष्ठो [sic]) मंदचेतसः (Ñ V1 B3 D10 °दतेजसः; V4 °न्नतेजसः). —[c]) Ś1 V2.3 B1 D5.12 भस्म°; Ñ2 B3 (m. also as in text) D13 °कृता (for भस्मीभूता). V3 T M4 महात्मानः; D12 **त्मानः. —[d]) Ś1 Ñ V B D1–3.5.7.10–13 कालस्य वशमागताः.

19 [a]) B4 D2 मे; G1.3 [ए]ते (for ते) —[b]) B4 D4 G1 वैवस्वतं. B4 स्वयं (for -क्षयम्). —[c]) V2 शतं जाति-; V3 शता यांतु; B2 D9 (B2 m. also; D9 m.) T2 M3 सप्तजन्म-; D2 विप्रजाति-; Cm.g.k.t as in text (for सप्तजाति-). Ś1 D5.12 -शता: संतु; B1 -गताश्चैव; D13 -शतान्येवं (for -शतान्येव). —[d]) Ñ2 V2 B2–4 D10.13 (B2 m. also, B3 m. also as in text) मृता यास्यंति (for मृतपाः सन्तु). B3 (m. also) दारुणाः; M4 सर्वथा (for सर्वशः). Dt D6.8 संभवंतु ते (for सन्तु सर्वशः). D9 (m. also) शववस्त्रादिहारिणः.

20 [a]) Ñ1 V3.4 B (B2 m. also) D3.5.7.9.11.13 T2.3 G2 स्वमांस-; V2 सुमांस- (for श्वमांस-). Ś1 D1–3.5.7.12 T2 -निरता- (for -नियता-). V1 स्वमांसाहारनिरता. —[b]) Cm.g.k.t मुष्टिका (as in text). Ś1 D5.11.12 पुक्कसा°; Ñ B3.4 D10 पुष्टिकामास्तु (Ñ2 B3 D10 °नाम [as in text]; B4 °माः सु-), V2.3 स्वस्तिका°; V4 नास्तिकाश्चैव; D3.7 M4 मौष्टिका°, D6 (gloss) मृतकवस्त्रादिहारिणः मुष्टिका नाम तन्नामानः इदानीं डोंबा इति प्रसिद्धाः; G1.3 मृतपा° (for मुष्टिका नाम). —[d]) Ś1 Ñ V B D1.3.5.7.10–13 T1.2 M4 [इ]ति; D2 मे (for [इ]मान्).

21 [a]) D11 missing; D14 T1.2 G2.4 M1.3 तु (for च). T3 दुर्बुद्धेर्. —[b]) Ś1 प्रदूषकृत्; D1–3.7.9.12.14 T1 प्र(D9.14 T1 हि)दूषयन्; D4 T2 G1–3 M1–3 अदूषयत्; D5 प्रदुष्यति; Ck t as in text (for ह्यदूषयत्). Ñ V B D13 M4 अदुष्टं (V4 °हस्तं) मां (M4 मामदुष्टं [by transp.]) प्र(B1 च) दूषयन् (V4 °यत्), D10.11 अदुष्टं मां प्रहृष(D11 °ष्य)यन् (sic). —[c]) V2 दोषतः; D10 हृषितः (sic) (for दूषितः). M4 -लोकेन (for -लोकेषु). —[d]) Ñ V B D10.11.13 अवाप्स्यति (for गमिष्यति). Ś1 D1–3.5.7.12 M4 निषाद इति विश्रुतः.

22 [a]) Ś1 D1–3.7.12 प्राणातिपाते. —[b]) D3.10 निर᳭. —[c]) V2 मसं (corrupt), V4 स मे (for मम). —[d]) Ñ V2 B D10 दुर्वृत्या; V1.3.4 दुर्वृत्तो (V1 °त्तेर्), G2 अदुर्गं (for दुर्गतिं).

23 D4 reads 23 in marg. —[b]) Ñ V B D10.11.13 M4 महामुनिः. —[c]) D1.2 व्याजहार; D3.7 व्यापारयन् (for विरराम). —M3 reads [d] *inf. lin. sec. m.* —[d]) M3 महायशाः. Ś1 D1–3.5.7.12 मुनिमध्ये महामतिः; Ñ V B D10.11.13 M4 तस्मिन्मुनि(V3 [M4 °मृषि)समागमे(V4 °वराश्रमे), M3 (on the line erroneously) विश्वामित्रोऽभ्यभाषत(=I. 59. 1[d]).

Colophon. D1–3.5.7.11.12 om. (Sarga cont.) —*Kāṇḍa name*: Ś1 V1 om. Ñ2 V2–4 B D10 आदि°. —After Kāṇḍa name, B4 ins. बालचरिते. —*Sarga name*: Ñ V1 D10 व(D10 वा)सिष्ठशापः; V2 B2–4 विश्वामित्रशापः; V3.4 शतानंदवाक्ये व(V4 वा)सिष्ठशापः. —*Sarga no.* (figures, words or both): Ñ1 V4 B1.4 om. Ś1 (m.) V3 Dt D4.6.8.14 S (except M4) 59; Ñ2 V1 B2.3 D10 61; V2 D9 62; M4 57. —D13 —कांडे—शापो—सर्गः 60. —After colophon, T2 G1.2.4 conclude with श्रीरामाय नमः; G3 श्रीमते रामानुजाय नमः; M2 श्री......नमः.

# ५९

तपोबलहतान्कृत्वा वासिष्ठान्समहोदयान् ।
ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥ १
अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः ।
धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ।
स्वेनानेन शरीरेण देवलोकजिगीषया ॥ २
यथायं स्वशरीरेण देवलोकं गमिष्यति ।
तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह ॥ ३
विश्वामित्रवचः श्रुत्वा सर्व एव महर्षयः ।
ऊचुः समेत्य सहिता धर्मज्ञा धर्मसंहितम् ॥ ४
अयं कुशिकदायादो मुनिः परमकोपनः ।
यदाह वचनं सम्यगेतत्कार्यं न संशयः ॥ ५
अग्निकल्पो हि भगवाञ्शापं दास्यति रोषितः ।
तस्मात्प्रवर्त्यतां यज्ञः सशरीरो यथा दिवम् ।
गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥ ६ G I. 62 8 B I 60 7 L. I. 56 7

## 59

D1–3 5 7 11 12 continue the previous Sarga.—Before I, B3 ins. :

1123* एतस्मिन्नेव काले तु मुनिर्बुद्धिमतां वरः ।

B3 cont , Ś1 B2 4 D1–3.5 7 11 12 ins. before 1 :

1124* स क्रोधविषमुत्सृज्य गाधिजो रघुनन्दन ।

[ Ś1 संक्रुद्धो विषम्; D3 7 स एवं क्रोधम्; D11 स रोष° ( for स क्रोधविषम् ). D1–3 7 गाधेयो B3 D1 2.5.12 रघुनंदन:. ]

1 $^{a}$) V3 B3 ( *sup. lin.* also ) ततो ( for तपो- ). Ś1 दृष्ट्वा; Dt D6 8 Ct ज्ञात्वा ( for कृत्वा ). V2 तपोवने हतान्मत्वा. —$^{b}$) V2 D11 वसिष्ठान्. —$^{c}$) Ñ V B D10 11.13 परं वाक्यं ( for महातेजा ).

2 D7 om. 2$^{abcd}$. —$^{c}$) Ś1 D1–3 5.12 धर्मज्ञश्च कृत ( D1 °ति; D3 °ः )ज्ञश्च; Ñ V B D10 11.13 धार्मिकः सत्यसंधश्च. —$^{d}$) D2 त्वां ( for मां ). Ñ1 V2 4 M4 शरणागतः( Ñ1 °तं ). B3 ( m also ) लोकानां हितकारकः. —After 2$^{d}$, B3 ins. :

1125* अस्य त्राणं करिष्यामि सर्वथा च न संशयः ।

—$^{e}$) V2 अनेनैव, D1–4 7.9 ( after corr. as in text ) तेना° ( for स्वेनानेन ). —$^{f}$) Ś1 D1–3.5 7 12 M4 स्वर्ग( M4 देव ) लोकं जिगीष( D12 °ष्य )ति( D2 °षतः ); Ñ V B D10 11.13 स्वर्गं गंतुमभीप्स( B4 °प्स्य )ति; Cg.k as in text. —After 2, Ñ V B D10 11.13 ins.

1126* तदिदं मुनयः सर्वे समनुज्ञातुमर्हथ ।
[ V3 D11 इमं ( for इदं ). V3 तदनुज्ञातुम्. ]

3 Ñ V B D1–3 5.7 10–13 om 3; M4 om. 3$^{ab}$. Ś1 reads 3 in marg. —$^{a}$) D9 G3 स- ( for स्व- ). —$^{b}$) D9 T2 G1–3 M1–3 स्वर्ग- ( for देव- ). —$^{cd}$) T2.3 G1–3 M2.3 प्रवर्ततां; Ct as in text. M4 प्रीत्यैनमृषयः सर्वे याजयध्वं मया सह. —After 3 ( D1–3 etc. after 2 as they om. 3 ), Ś1 D1–3.5.7.12 ins. .

1127* अथैवं भाषिते वाक्यं महायज्ञफलैषिणा ।

[ D2 [ ए ]न, D5 7 [ इ ]द ( for [ ए ]व ) D1.2 12 प्राप्य( D2 °पि )ते, D3 7 व्याहृते. D2 3 5 7 वाक्ये, D12 कामो ( for वाक्य ) D1.2 -फलैषिण ; D7 -फलैषिण ]

D12 cont

1128* त्रिशङ्कुना म( हा )भागास्तथैतत्कर्तुमर्हथ ।

4 $^{a}$) B1 reads वचः in marg. —$^{b}$) Ñ V B D10 13 ततस् ( D13 तत्र ) ते मुनिसत्तमाः ( B3 [ m. also ] 4 °पुंगवाः ). —$^{cd}$) Ś1 D1–3 5 7 12 समेत्य वचनं; Dt D6 8 T3 समेताः ( T3 °त्य ) सहसा ( for समेत्य सहिता ). Ś1 D1–3 5 7 12 -यंत्रिताः; Ct as in text ( for -संहितम् ). G1 धर्मार्थसहितं वचः ( for $^{d}$ ) Ñ V B D10 11 13 मिथः संमंत्रयामासुर्विश्वामित्रभयार्दिताः.

5 $^{b}$) M4 ऋषिः ( for मुनिः ). Ñ V B D10 11.13 तपस्वी क्रोधनो भृशं. —D3 om. from स्य up to न in $^{d}$. —$^{c}$) G2 M1 ह्येष, Cg as in text ( for सम्यग् ). —$^{d}$) D11 -कृच्च कार्यम्; T3 तत्कार्यं तु; G2 M1 कर्तव्यं च ( for एतत्कार्यं ). Ś1 D1.2 5.11 M4 असंशयं ( for न संशयः ). —For 5$^{cd}$, Ñ V B D10 11 ( ins after 5$^{ab}$ ) 13 subst ·

1129* न विग्रहः सहानेन क्षमोऽस्माकं शरीरिणाम् ।

[ V4 B1 स- ( for न ). V4 सदानेन. B2–4 ( B2 m. also as above; B3 m. also ) मनीषिणां ( for शरीरिणाम् ). ]

6 $^{a}$) Ñ V B D10.13 अग्निकोपो; D1–3.5.7.11.12 M4 अग्नि( D3 °सि )रूपो; Ct as in text. —$^{b}$) V1 D2.3.7 कोपितः; Dt D6 8.9 T1 G1 रोषतः; G4 दारुणः ( for रोषितः ). —After 6$^{ab}$, M4 ins. :

1130* कामक्रोधौ न जितवान्क्षमो नानेन विग्रहः ।

—$^{c}$) Ś1 Ñ1 V B2–4 D1–5( D4 before corr. as in text ) 7.9–13 T2 G1 M2–4 प्रवर्ततां. D4 यज्ञं. —After 6$^{c}$, Ś1 Ñ V B D1–3.5.7.10–13 ins. .

G. 1. 62 8
B 1 60 6
L 1 56 8

ततः प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत ॥ ७

एवमुक्त्वा महर्षयः संजह्रुस्ताः क्रियास्तदा ।
याजकश्च महातेजा विश्वामित्रोऽभवत्क्रतौ ॥ ८

ऋत्विजश्चानुपूर्व्येण मन्त्रवन्मन्त्रकोविदाः ।
चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि ॥ ९

ततः कालेन महता विश्वामित्रो महातपाः ।
चकारावाहनं तत्र भागार्थं सर्वदेवताः ॥ १०

नाभ्यागमंस्तदाहूता भागार्थं सर्वदेवताः ॥ ११

ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः ।
स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ।
पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ॥ १२

एष त्वां स्वशरीरेण नयामि स्वर्गमोजसा ।
दुष्प्रापं स्वशरीरेण दिवं गच्छ नराधिप ॥ १३

स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ।
राजंस्त्वं तेजसा तस्य सशरीरो दिवं व्रज ॥ १४

---

1131* यथैवोक्तं महर्षिणा।
क्रियतां च तथा यत्नः.
[ (l 2) V3 4 B1 D2 यज्ञ (for यत्न).]

—D2 om. (hapl ) $6^{d}$–$7^{a}$.—$^{d}$) V3 B4 सशरीरं. B1 यदा (for यथा). Dt D6 8 12 दिवि.

**7** D2 om. $7^{a}$ (cf. v.l. 6).—$^{a}$) D14 T1 G1 3 4 तथा (for ततः). Ś1 Ñ V1–3 B D1.3 5.7.10–13 M4 प्रव(V2 D11 °..)वृते; V4 प्रवर्तते; T2 G1 3 M2 3 प्रवर्ततां. Ck t as in text (for $^{a}$).—$^{b}$) D9 समभिधिष्ठित; Cm g k as in text. Ś1 D5 12 सर्वांगः(D12 °ग) सर्वधिष्ठितः; Ñ V B D10 11 13 M4 सर्वसंभारसभृ(V1.4 B3 °वृ)तः; D1–3.7 सर्वांगः(D1 2 °ग) समधिष्ठि(D3 °ष्ठि)तः.

**8** Ñ V B D1–3.5 7.10–13 M4 om., Ś1 reads in marg $8^{ab}$.—$^{a}$) T2 M3 तमे(M3 त ए)वमुक्त्वा ऋषयस्.—$^{b}$) D4 T3 सचक्रुरताः; D9 सुहृद्स्तत्-; D14 T1 G4 Cg चक्रुस्तास्ताः, M2 संजग्मुस्ताः.—$^{c}$) Ś1 D1–3 5 7 12 महायज्ञे. Ñ V B D10 13 अध्वर्युरभवत्तत्र; D11 M4 अध्वर्युश्चाभवत्तस्य (M4 °त्र).—$^{d}$) Ś1 Ñ V B D1–3 5 7 10–13 महातपाः (B2 4 °यशाः; D13 °मुनिः); M4 स्वयं मुनिः (for ऽभवत्क्रतौ).

**9** $^{a}$) D1.2 4.6.7 9.12 G2 M3 [आ]नुपूर्वेण.—$^{b}$) D2–4.7 M2 3 मंत्रविन्.—Ś1 D1–3 5.7.12 om. (hapl.?) $9^{c}$–$10^{b}$.—$^{c}$) D4 marg; D6 om. (hapl.), D9 कार्याणि (for कर्माणि).

**10** Ś1 D1–3.5.7 12 om. $10^{ab}$ (cf. v l. 9).—$^{b}$) T3 महामुनिः (for °तपाः).—For 9–$10^{b}$, Ñ V B D10.11 13 M4 subst..

1132* ऋत्विजश्चाभवंस्तत्र मुनयः संशितव्रताः।
तस्य यज्ञे तदा तस्मिंस्त्रिशङ्कोर्भूरितेजसः।
विश्वामित्रोऽथ भगवान्मन्त्रविन्मन्त्रपारगः।

[ (l 1) M4 अन्ये (for तत्र).—(l. 2) B1 यस्य (for तस्य). D10 सदा तस्मिन्; D11 महाबाहोस् (for तदा तस्मिन्). V2 हरि- (for भूरि-).—(l. 3) V3 B2 [ऽ]पि (for ऽथ). D13 M4 मत्रवन्. D13 -कोविदः (for-पारगः).]

—$^{c}$) Ś1 D1–3.5.7.12 चक्रुरावाह(D2 हवा [metathesis])नं. Ñ V B D10.11.13 M4 यज्ञे (for तत्र) —$^{d}$) Ñ V B D10 11.13 M4 त्रि(M4 ∗ [submetric])दिवौकसां; Cv.r m. g t as in text (for सर्वदेवताः) Ś1 D1–3 5 7 12 देवानां देवसंमिताः.

**11** $^{a}$) Dt D6 8 G2 M1 तदा तत्र; D4 T3 M2 ततस्तत्र; D9 G1 3 तत्र तत्र (for तदाहूता). Ś1 D5 12 न चा(D12 चान्य [sic])जग्मुस्तु तास्तत्र; Ñ V B D10 13 नाभ्यगच्छन्य(V4 °त्त)दाहूता(V4 °तो), D1–3 7 न चाजग्मुस्तत्र(D1 °तस्) तत्र; D11 M4 नाभ्यागच्छन्यथा(D11 °दा)हूता; T2 नाभ्यागच्छं°; M3 नाभ्यगच्छंस्तदा भीता.—$^{b}$)=$10^{d}$. V2 भागार्हास्. Ñ (Ñ2 m.) V B D10.11 13 तत्र दे°; M4 त्रिदिवौकसः (for सर्वदेवताः).

**12** $^{a}$) D12 तत्र (for ततः) Dt D6 8 कोप- (for क्रोध-).—$^{b}$) T3 महातपाः.—$^{c}$) Ś1 D1–3 9 13 स्रुचम्. Ñ V B D9–11 M4 भगवांस् (B4 repeats from वांस् up to मिद् in $^{d}$; M4 °वान्), D1.2 सक्रोधं; D3 illeg., D13 संक्रुद्धस् (for सक्रोधस्).—$^{d}$) G1 damaged for मब्र. Ś1 D5 12 त्रिशंकुं तं वचोब्रवीत्; D1–3.7 M4 इदं वचनमब्रवीत्.—After $12^{cd}$, T2 M3 ins, while M4 subst for $12^{ef}$

1133* पश्यन्तु तपसो(M4 मे तपो) वीर्यमद्य देवाः सवासवाः।

—$^{e}$) D3 illeg up to second प. D11 यस्य (for पश्य).—$^{f}$) Ś1 D5 12 पूजितस्य; Ñ2 V3 B3 (*sup. lin.* also as in text) D9.10.13 ऊर्जितस्य; D1–3.7 अर्जितस्य; D4 11 स्वर्जितस्य V4 तपोधन (for नरेश्वर).

**13** M4 transp. 13 and 14.—$^{a}$) D3 वै (for त्वां). Ñ2 V2 4 D1–5 7 10–13 G3 M2 स(V4 सु; D3 त्वां)श(D10 ∗)रीरेण.—Ñ2 om. (hapl.) $13^{bc}$ —Ś1 D5 12 13 om. $13^{cd}$.—$^{c}$) Ñ1 D4 दुःप्रापां; V1.4 दुः(V4 दुष्)पापं; V2 3 D2 7 9 11 दुःप्रापं(V3 °ह); B1 D3 दुष्प्राप्यं; B3 (m also).4 त्रिशंको (for दुष्प्रापं). V4 सुशरीरेण; D10 11 T2 सशरीरेण (D11 °∗ा).—$^{d}$) V3 Dt D6 8 G1 3 स्वर्गं (for दिवं). V3 महीपते; Dt D6.8 M2 नरेश्वर (for नराधिप).

**14** M4 transp. 13 and 14.—$^{a}$) Ck.t स्वार्जितं किंचिद् (as in text). D4 अद्य; D9 यदि (for अपि). Ś1 Ñ V B D1–3.5.7.10–13 M4 बाल्यात्(M4 जन्म)प्रभृति यत्किंचिन्

उक्तवाक्ये मुनौ तस्मिन्सशरीरो नरेश्वरः ।
दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा ॥ १५
देवलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ।
सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ॥ १६
त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ।
गुरुशापहतो मूढ पत भूमिमवाक्शिराः ॥ १७
एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः ।
विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ॥ १८

तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ।
रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १९
ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ।
सृजन्दक्षिणमार्गस्थान्सप्तर्षीनपरान्पुनः ॥ २०
नक्षत्रमालामपरामसृजत्क्रोधमूर्छितः ।
दक्षिणां दिशमास्थाय मुनिमध्ये महायशाः ॥ २१
सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ।
अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।
दैवतान्यपि स क्रोधात्स्रष्टुं समुपचक्रमे ॥ २२ G. I. 62 23 B I. 60. 23 L. I. 56 21

( Ś1 D1–3 5 7 12 यद्यस्ति ). —b ) Ś1 D1–3 5 7.12 किंचिन्मे ( for मया हि ). Ñ V2 3 B D10 11 13 M4 मया ( B1 मया मया [ ditto. ] )सम्यक्तपश्रितं, V1 तन्मया सम्यगुपश्रितं ( hypermetric ); V4 मया सम्यगुपार्जितं. —c ) Ś1 D1–3. 5 12 तेजसस्तस्य महतः; Ñ V B D10 11 13 तेजसा तस्य तपसः; M4 याव᳚स्येति तस्य त्वं. —d ) V3 सशरीरं; B1 सु°; B3 4 स्व°; M4 फलेन त्रि- ( for सशरीरो ).

**15** a ) T3 उक्ते त्वेवं ( for उक्तवाक्ये ) Ś1 V B1 2 4 D5.11.12 एवं; Ñ B3 D1 10 13 चैवं; D2 3 7 तत्र ( for तस्मिन् ). —b ) Ñ1 B4 स्वशरीरो. Ś1 Ñ V B D1–3 5.7 10–13 नृपस्तदा ( Ś1 D1–3 5 7 12 °त ); G1–3 M1 नराधिपः; M4 नृपात्मजः. —c ) Ś1 D1–3.5 7 12 स्वर्गं; D9 द्रिव्यं ( sic ) ( for दिवं ) Ñ V B D10 11.13 M4 ययौ स्वर्गं खमाविश्य. —d ) Ś1 D1–3 5 7 12 विप्राणां तत्र पश्यतां.

**16** T1 damaged up to त्रिशङ्कुं —a ) Ñ2 V3.4 B D10 11 13 त्रिदिवं तं ( V3 तु; V4 त्वां, B1 4 D10 om तं [ submetric ] ); Dt D6 8 स्वर्गलोकं; D7 9 M3 °लोकं ( for देवलोक- ). Ñ1 V1 त्रिदिवं गतमावेक्ष्य, V2 गच्छंतं त्रिदिवं पश्यन्. — c ) D12 सर्वैः सह ( by transp. ) देवगणैर्.

**17** a ) Ś1 Ñ V B D1–3.5.7 10-13 पत भूमौ ( for गच्छ भूयस् ) —b ) Ś1 D1–3 5 12 न त्वं स्वर्गे; Ñ2 V4 B2 3 D10.13 M4 नासि स्वर्गे; B4 D11 नास्ति स्वर्गे, D7 स्वर्गे तत्त्वं ( for नासि स्वर्ग- ). G1 स्वर्गगतालयः; Cg.k.t स्वर्गकृतालयः( as in text ). Cm as in text ( for b ). —c ) Ś1 V1 D5 11.12 गुरुशापादभि ( D5 °ति )हतो; Ñ V2–4 B D1–3 7.10 13 गुरुशापाद्( V4 °द ) पहतो. —d ) Ś1 Ñ V1.2 B2–4 D1–3.5 7 10–13 मूढ ( Ñ2 V2 B3 4 D5.13 °ढः ) शीघ्रम्; V3 °शीघ्रम्; V4 मृत्यु दीर्घम् ( sic ); B1 मूचमीम् ( corrupt ) ( for पत भूमिम् )

**18** V2 reads 18 in marg. —b ) V1 D11 प्रापतद्. Ś1 B2 D5 12 G1.3 भुवि; Ñ V B1 3 4 D10.11 13 M4 दिवः ( for पुनः ). —B1 om. 18c–20b. —c ) D9 निष्क्रोशमानस्. Ś1 D3.5.7.12 त्रायस्वेति च विक्रोशन्; Ñ1 V3.4 B2–4 D11 उपाक्रोशत्स( V4 °से ) पाहीति; Ñ2 V1.2 D10 13 उपक्रोशन्स ( V2 °शंश्च ) पाहीति; D1 2 त्रायस्वेति च ( D2 * [ submetric ] ) चुक्रोश. —d ) Ñ V B2–4 D10.11.13 अवाक्शिराः ( for तपोधनम् ).

**19** B1 om. 19 ( cf. v l 18 ). —a ) T3 श्रुत्वा तद् ( by transp ). Ś1 D1–3 5 7 12 तस्य तद्वचनं श्रुत्वा ( by transp. ) —b ) M3 क्रोध°; M4 पात्यमानस्य Ś1 D1.2 5 12 पत( D2 पात्य ) मान ( D12 °✻✻ )स्य सत्रिण.; Ñ V B2–4 D10 13 पाहीति( V4 °तितः ) पततो दिवः( D13 मुनि· ); D3 7 विश्वामित्रो महामुनिः; D11 पाहीति यजतस्तदा. —c ) D4 T3 क्रोधम् ( for रोषम् ). Ś1 D2 M3 आहरयत्; Cg k t आहा° ( as in text ) D1 ( gloss ) कुर्वन्. Ñ V B2–4 D10 11 13 विश्वामित्रो भृश क्रुद्धस्. —d ) Ñ V1–3 B2–4 D10 13 [ उ ]वाच तं, V4 [ अ ]ब्रवीत् ( submetric ) ( for चाब्रवीत् ).

**20** B1 om. 20ab (cf. v.l 18 ). —a ) Ś1 D1–3 5.7 ( m ).12 च ( D3 7 स [ as in text ] ) काकुत्स्थ; M4 च तेजस्वी. Ñ V B2-4 D10 11 13 ततो ब्रह्मतपोयोगात्. —Ñ2 B3 D10 read cd twice —c ) Ś1 D1–3 5 7 12 ततो, Ñ1 V B ( B3 second time ) D11 सृष्ट्वा; Ñ2 D10 ( both second time ) दृष्ट्वा; Cm.g k.t as in text ( for सृजन् ). Ñ2 B3 D10( all first time ) 13 असृजद्दक्षिणे मार्गे( D10 भागे ). —D2 om. 20d–21c. —d ) Ñ2 ( second time ) सप्त ऋषीन् ( hypermetric ) Ś1 D1 3 5 7.10( first time ) 12 अपराजितः; Ñ V1 2.4 B D10 11 ( Ñ2 B3 D10 second time ) अपरान्प्रभुः; Ñ2 B3 ( both first time ) D13 अपरांस्ततः.

**21** D2 om. 21abc ( cf v l. 20 ). —a ) Cg t नक्षत्रमालाम्( as in text ). Ñ1 V B1.2.4 Dt D6 8 -वंशमपरं; Ñ2 B3 D10 13 -चक्रमपरं; D11 -वर्गमपरम् ( for -मालामपराम् ). —b ) Ś1 D3 5 7 12 चासृजत्; D1 योसृजत्. Ñ V B D10.13 स्रष्टुं समुपचक्रमे. —d ) Dt D6.8.9.14 T G4 M3.4 ऋषि-; Cg as in text ( for मुनि- ). Ś1 D1–3.5.7 12 14 T1.2 G M महातपाः.

**22** a ) G1 3 कृ( G1 damaged )त्वा; G2 दृष्ट्वा. Ś1 D1–3 7.12 -मालां स( Ś1 D12 च ); D5 -मालायां ( for -वंशं च ). —D1–3.5 7.12 om ; Ś1 reads in marg 22cd. —ef ) D4 T3 सक्रोधः; D9 संक्रोधात्. Ś1 D1–3.5 7.12 देवानपि च संक्रुद्धः स्रष्टुमेवा( D2 शप्तुं चाप्य )करोन्मतिं. —For 21c–22,

G. I. 62. 24
B. I. 60. 24
L. I. 56. 21

ततः परमसंभ्रान्ताः सर्षिसंघाः सुरर्षभाः ।
विश्वामित्रं महात्मानमूचुः सानुनयं वचः ॥ २३
अयं राजा महाभाग गुरुशापपरिक्षतः ।
सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥ २४
तेषां तद्वचनं श्रुत्वा देवानां मुनिपुंगवः ।
अब्रवीत्सुमहद्वाक्यं कौशिकः सर्वदेवताः ॥ २५

सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः ।
आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥ २६
स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः ।
नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥ २७
यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ।
मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ॥ २८

---

Ñ V B ( V2 B1 om. hapl ) D10 11 13 subst , while M4 subst. l. 3 only for $22^{cdef}$ :

1134* स्वर्गस्य दक्षिणे मार्गे तपोब्रह्मबलाश्रयात् ।
सृष्ट्वा च नक्षत्रगणं क्रोधसंरक्तलोचनः ।
इन्द्रादीनपरान्देवान्स्रष्टुं समुपचक्रमे ।

[ D13 om. l. 1 and 2. —( l. 1 ) D11 तनो ( for तपो- ). Ñ2 D10 -वराश्रयात् B2 तपोवलसमाश्रयात् ( for the post. half ). —( l. 2 ) B4 दृष्ट्वा, D11 illeg. ( for सृष्ट्वा ). V3 om. च ( submetric ) D11 नक्षत्रगणान्. —( l 3 ) V4 इद्रादीन्परान् ( submetric ) ]

**23** $^{a}$ ) V2 परमसंत्रस्तान्. —D3 om. 23 $^{b}$. —$^{b}$ ) Ś1 Dt D1 2.4–9 12 T3 M2–4 Ct सुरा ( D7 तदा )सुराः; D14 T1 G4 सचारणाः ( for सुरर्षभाः ). Ñ V B सदेवर्षिगणाः सुराः ( V2 °णान्सुरान् ; V4 °णास्तथा ), D10 11.13 सर्षिदेव( D11 सर्वे सर्षि )गणाः सुराः. —After $23^{ab}$, D14 T1 2 G4 M3 ins. :

1135* सकिंनरमहायक्षाः सहसिद्धाः सुरासुराः ।

[ T2 M3 सदेवा·( M3 °सिद्धा· ) समहोरगा·, G4 ससिद्धा ससुरासुरा· ( for the post. half ). ]

—$^{c}$ ) D11 विश्वामित्र-. —$^{d}$ ) D7 सानुशयं.

**24** $^{a}$ ) Ś1 D5 12 शुचिः सौम्य; B1 द्विजश्रेष्ठ ( for महाभाग ). Ñ V B2–4 D1–3.7.10 11 13 M4 अयं राजात्मजः सौम्य ( V4 सोसौ; B4 सम्यक् ) —$^{b}$ ) Ñ2 -तिरस्कृतः; V1 D1 ( gloss उपहत ) 5.7.9 T3 G1 -परीक्षितः. —$^{c}$ ) B4 स्वशरीरो. Ñ V B D10.11.13 गंतुं ( for यातुं ). —$^{d}$ ) G1 damaged for ना. Ś1 D1–3.5 7.11.12 [ ए ]ष( D1.3 12 °व ) महायशाः; Ñ V B D10 13 [ अ ]कृतपावनः; D4 T3 [ इ ]ति त°; D9.14 T1 2 G4 [ ए ]ष त°; M4 [ अ ]तित° ( for [ ए ]व तपोधन ). —After 24, Ñ V B D1 9–11.13 ins. :

1136* प्रमाणानि प्रमाणस्थैः परिपाल्यानि यत्नतः ।
पुराणैः स्थापितां संस्थां नातिक्रमितुमर्हसि ।

[ ( l. 1 ) Ñ1 °स्थ ; V1 2 B1 प्रमाणैस्तै·; B4 °ज्ञै ; D1 प्रमाणं ते; D13 च पाल्यानि ( for प्रमाणस्थै· ). D13 यत्नतो हि भवादृशैः ( for the post. half ) D1 ( gloss ) यदि ते तव प्रमाणानि प्रत्यक्षादीनि प्रमाणानि परिपाल्यानि —( l. 2 ) Ñ2 B3.4 D10.13 प्रमाणैः; D1.9 पौराणी ( for पुराणै· ). Ñ1 V4 B1 D9.10 नातिक्रामितुम्, D1 न व्यतिक्रांतुम्. ]

**25** $^{a}$ ) D3.4.7.9 T2 G2 M1.3.4 तु ( for तद् ). Ś1 D1 2 5 12 तासां तु( D5 च ) वचनं; Ñ V B D10 11 13 इति तेषां वचः. —$^{b}$ ) Ś1 D1–3 5 7.12 देवतानां( D3 7 °वानां तु ) महाद्युतिः; M4 दैवतानां महामुनि·. —$^{c}$ ) Ś1 D5 11 12 मधुरं; Ñ2 B3 D10 13 स्नेहवद् ; B1 2 D1 9 सुमहा- ( for सुमहद् ). —$^{d}$ ) Ś1 D1–3.5 7.11 12 M4 वाक्यज्ञः ( for कौशिकः ). Ñ V B D10 13 इदमाभाष्य देवताः.

**26** $^{a}$ ) Ñ V B D10.11 13 M4 विबुधास् ; D2 12 भद्रं च; D9 भद्र ते; Cg t as in text ( for भद्रं वस् ). —$^{b}$ ) V2 तस्य ( for अस्य ). Ñ V B D10 11 13 M4 धीमतः. Ś1 D1–3 5 7 12 ( D2.12 with hiatus ) इ( D1–3 7 ऐ )क्ष्वाकोरमितप्रभाः( D7 °भोः ). —$^{cd}$ ) D9 ( after corr. as in text ) आरोपणं. Dt D6 8.9 ( before corr. as in text ) T1 प्रतिज्ञातं. M4 वक्तुम् ( for कर्तुम् ). Ś1 D1–3.5.7 11.12 आरोह( D1–3.7 °प )णे प्रतिज्ञां मे नानृतां( D1 °न्यथा ) कर्तुमर्हथ.

**27** D1 om. ( hapl. ) 27–28. —$^{a}$ ) Ñ V B D10 13 गमनं; D2 स्वर्गे तु ( for स्वर्गोऽस्तु ). D14 स्वशरीरस्य. M4 सशरीरस्य च स्वर्गं. —$^{b}$ ) Ś1 D5 11.12 मदनुग्रहात् ; Ñ V B1–3 D7.10.13 मत्परिग्रहात् ; B4 °धीमतः; D2 मित्रविग्रहात् ; D3 मर्त्यविग्रहात् ; D4 एष शा°; D9 ( after corr as in text ) °पतः, T3 इव शा°; G1–3 M1 एव शा°; M4 अस्तु शा° ( for अस्य शाश्वतः ). —After $27^{ab}$, B1 ( *sec. m.* ) ins. :

1137* नक्षत्राण्यपि चैतानि मया सृष्टान्यशेषतः ।

—$^{c}$ ) D3 नक्षत्राणीति. —$^{d}$ ) G1 3 ध्रुवाण्यपि; M1 [ अ ] ध्रुवाण्यथ; M2 ध्रुवाणि च. Ś1 Ñ V B D2 3.5.7.10–13 ध्रुवाणीमानि संतु नः ( Ś1 B4 D12 °तु च; Ñ2 °त्वधः; V1 °तु वा; V3.4 B3 D5 10 13 °तु वः; D2 °तु मे ).

**28** D1 om. 28 ( cf. v.l. 27 ). —$^{a}$ ) V2 D2 3 7.11 M3 चरिष्यंति. —$^{b}$ ) T3 तिष्ठंति; M4 ध्रुवाणि ( for तिष्ठन्तु ). Ś1 D5 12 स्थितान्येतानि वै य( D12 त )था; Ñ V B D10.13 तावत्स्थास्यंत्यमूनि तु ( Ñ2 B3.4 D10 °नि च; V1 °वैं त्त [ sic ]; D13 °न्यपि ), D2 स्थितानि तानि संतु मे; D3.7 स्थितान्येतानि संतु वै. —$^{c}$ ) G4 कृताः ( for सुराः ) Ś1 सर्वं. Ñ V2–4 B1.2.4 एतां( V4 °षां [ sic ] ) प्रतिज्ञां सर्वे मे; V1 एताः प्रतिज्ञाः सर्वा मे; B3 एते प्रतिज्ञाः ( m. also as in Ñ ) सर्वे मे; D11.13 एवं प्रतिज्ञां सर्वे मे ( D13 विहितां ). —D7 12 om. ( hapl. ); M3 reads *inf. lin. sec. m.* $28^{d}$—$29^{a}$. —$^{d}$ ) Ñ V1.3.4 B D10.13 सम°; V2 मत्वा त्व° ( sic ); D11 समर्थयितुम् ; G2 तथा° ( for तदनुज्ञातुम् ).

# ७४

राम दाशरथे वीर वीर्यं ते श्रूयतेऽद्भुतम् ।
धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १
तदद्भुतमचिन्त्यं च भेदनं धनुषस्त्वया ।
तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम् ॥ २
तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३
तदहं ते बलं दृष्ट्वा धनुषोऽस्य प्रपूरणे ।
द्वन्द्वयुद्धं प्रदास्यामि वीर्यश्लाघ्यमिदं तव ॥ ४
तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा ।
विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५
क्षत्ररोषात्प्रशान्तस्त्वं ब्राह्मणश्च महायशाः ।
बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६   G. 1 77 7 B. 1. 75. 6 L. 1 71. 7

## 74

☞ Ñ1 missing Sarga 74 (cf v.l I 66. 10). D1–3 5 7 11 12 continue the previous Sarga.

**1** $^{a}$) Ś1 D1 2 5.7 12 M4 शूर, D3 om, D9 Cg राम (for वीर).—$^{b}$) T1 reads वीर्यं ते *inf lin* M4 महद् (for श्रूयते) Ś1 D1–3 5 7 9 12 श्रूयते ते महद्बलं.—$^{cd}$) Ś1 D1–3 5 7 9.12 सर्वं (for चैव). D5 निखिलेषु (for निखिलेन). D2.9 श्रुतं मया (by transp.). Ñ2 V B D10 11 13 M4 धनुः किल त्वया (M4 धनुर्गत्वा यथा) भग्नं दिव्यं यत्तच्छ्रु (D11 °त्तु श्रु)तं मया.

**2** D13 om $2^{ab}$—$^{a}$) Ñ2 V B D10 M4 श्च (B4 त [sic]) द्भुतं त (Ñ2 D10 य)त्कृतं राम; D5.11 तदद्भुतं विचिंत्यं च (D11 कृतं राम).—$^{b}$) Ś1 Ñ2 V B D1–3.5 7.9–12 M2 धनुषो भेदनं (by transp.). Dt D6 8 तथा (for त्वया)—T3 om. $2^{c}$–4.—$^{c}$) Ś1 D1.2.5.9.12 श्रुत्वाहं सम°; D3 7 श्रुत्वेदं सम°.—$^{d}$) Ś1 D1–3 5 7 9 12 गृहीत्वेदं (Ś1 °ह्नीत्वेदं; D5 °ह्नीत्वैनं) महद्धनुः.

**3** T3 om. 3 (cf. v.l. 2). D1–3 7 9 om. (hapl.) $3^{ab}$.—$^{a}$) D4 यद् (for तद्) Ś1 D5.12 समनुप्राप्तं (for घोरसंकाशं).—$^{b}$) G2 जामदग्न्य-. D12 शरीसमं (corrupt) (for महद्धनुः).—After $3^{ab}$, M3 ins. l. 5–6 of 1353*.—$^{c}$) T2 पूजयस्व; Ct as in text. G1 3 नरश्रेष्ठ; M3 शरेणेह (for शरेणैव). Ś1 D1–3.5.7.9.12 सशरं (D2 शरणं) पश्य राम त्वं.—$^{d}$) D9 सबलं (for स्व°). Ś1 D1–5.7 9 12 T1 मे (for च).

**4** T3 om 4 (cf. v.l. 2).—$^{a}$) Ś1 D1–3.5 7.9 12 ज्ञात्वा (for दृष्ट्वा).—$^{b}$) D2 धनुषोहं (for धनुषोऽस्य). Dt D6.8 धनुषोप्यस्य पूरणे.—D1 reads $4^{c}$–$5^{b}$ in marg.—$^{c}$) Ś1 D5.12 धनू राम; D1–3.7 द्वंद्वं राम; D4 द्वंद्वं युद्धं (for द्वन्द्वयुद्धं).—$^{d}$) D14 T1 G1 4 वीरश्लाघ्यम्; Ck t as in text. Dt D4.6 8 G1.3 M2 अहं (for इदं). D1–3 5.7.12 वीर्यश्लाघ्यवत (D12 °तव [metathesis])स्तव; D9 वीर्यं श्लाघ्यं महत्तव.—For $2^{c}$–4, Ñ2 V B D10.11.13 M4 subst., M3 ins. l. 5–6 only after $3^{ab}$

1353* श्रुत्वैवाहमनुप्राप्त आदायेदं महद्धनुः ।
अनेन धनुषा राम मया कृत्स्ना मही जिता ।
पूरयेदमपि क्षिप्रं बलं दर्शय राघव ।
विकर्ष चापं संधाय बाणेनानेन राघव ।
गृहाणेदं धनुर्दिव्यं शरं चेमं मयोद्यतम् ।
यदि संधास्यसीदं त्व बाणेनानेन कार्मुकम् ।
ततो दास्यामि युद्धं ते वीर्यश्लाघ्यमनुत्तमम् ।

[(l. 1) V4 प्रादायेद; D10 आदायाह (for आदायेदं) M4 श्रुत्वाह समनुप्राप्तो गृहीत्वा परम धनु.—(l 2) M4 क्षत्रम् (for राम). D10 मही कृत्स्ना जिता मया (by transp.) M4 असकृत्सूदित मया (for the post half)—(l 3) V1 पूरयेद्यम्. V3 धनु°, B2 *inf. lin*, B4 अग्नि- (sic) (for अपि) V1 दर्शयित्वा (hypermetric) (for दर्शय). M4 गृहीत्वाग्रे धनुर्मम (for the post half).—B2 reads l 4 in marg.—(l. 4) V1 M4 विकर्षं चापि; V2 विकर्ष्यं चापि; V3 विचकर्ष चाप (hypermetric); V4 विकर्षश्चापि; B1 विचकर्षासि (sic), B2 विकृष्य चाप, D11 पूरयित्वा तु (for विकर्ष चाप). V3 कार्मुक (for राघव).—(l. 5) V1.2 [इ]म (for [इ]द). V3 B1 [ए]न, V4 M4 [इ]द; B4 M3 [ए]व (for [इ]म). D10 °ते. M3 ममो° (for मयोद्यतम्).—(l. 6) B2 हि; M4 तद् (for त्वं). Ñ2 B3 D10 यदि संधास्यसि त्व (Ñ2 द्व [sic])हि, D13 शक्नोषि चेद्योजयितुं; M3 यदि संधानशक्तिस्ते (after धा *inf lin sec. m.*) (for the prior half).—(l. 7) D13 चापं ते; M4 ते युद्ध (by transp.) (for युद्ध ते). M4 अह युधि (for अनुत्तमम्).]

—After 4, G2 M1.3 ins.

1354* भीतो यदि धनुस्त्यक्त्वा निर्जितोऽस्मीति वा वद ।
अथवा द्वन्द्वयुद्धं मे दाता त्वं वै न संशयः ।

**5** D1 reads $5^{ab}$ in marg. (cf. v.l. 4).—$^{a}$) Ñ2 V B D10.13 M4 [इ]दं; D11 [ए]तद् (for तद्).—Ñ2 reads $5^{ba}$ in marg.—$^{b}$) T3 तथा (for तदा).—$^{c}$) V4 विषंडमनसो; D1–3 7.9.11 विवर्ण° (for विषण्णवदनो). Ś1 D1–3.5.7.12 त्रस्तः; Ñ2 V B D10 11.13 M4 भूत्वा; D9 तत्र (for दीनः).—$^{d}$) Ś1 D1–3.5 7.12 दीनम्; Ñ2 V B D10 13 प्रणतो; D9 इदम् (for वाक्यम्). D11 कृतांजलिरभाषत.

**6** $^{a}$) Ś1 D1–3 5.7.9 क्षात्राद् (for क्षत्र-). D3.5.7 दोषात् (for -रोषात्). D12 क्षात्रदोषात्.—$^{b}$) D3 7 ब्राह्मणोसि; D4

G 1. 77. 8
B 1. 75. 7
L 1. 71. 7

भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् ।
सहस्राक्षे प्रतिज्ञाय शस्त्रं निक्षिप्तवानसि ॥ ७
स त्वं धर्मपरो भूत्वा काश्यपाय वसुंधराम् ।
दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ८
मम सर्वविनाशाय संप्राप्तस्त्वं महामुने ।
न चैकस्मिन्हते रामे सर्वे जीवामहे वयम् ॥ ९
ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् ।
अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥ १०
इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते ।
दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११
अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे ।
त्रिपुरघ्नं नरश्रेष्ठ भग्नं काकुत्स्थ यत्त्वया ॥ १२

ब्राह्मण त्वं, D12 ब्राह्मण्यश्च; M3 ब्राह्मणस्त्वं (for ब्राह्मणश्च). Dt D4 6 8 महातपा॰. G1 3 ब्राह्मणानां च संनिधौ. —For 6ab, Ñ2 V B D10.11 13 M4 subst. :

1355* राम रोषः प्रशान्तस्ते ब्राह्मणस्त्वं शमात्मकः ।

[ V1 समागतः, V4 दयात्मक, B3 4 D11 समात्मक, M4 शमात्मन (for शमात्मक॰) ]

—c) D1 नाम (for मम) —d) Ś1 D1–3 5.7 9 11 12 नालयं (D11 प्रसादं) कर्तुमर्हसि.

7 D5 om. (hapl.?) 7.—a) Ś1 D1–3 7 9 12 भृगूणां हि (D1 च) (for भार्गवाणां).—b) D14 ॰व्रतचारिणां.—d) Dt D3.6.8 शस्त्रं प्रक्षिप्तवानसि; D7 शस्त्रं विक्षिप्त॰; M1 शास्त्राणि क्षिप्त॰.—For 7, Ñ2 V B D10.11 13 M4 subst.

1356* भृगूणां हि कुले जातः प्रशान्तानां महात्मनाम् ।
तपःस्वाध्यायशीलानां न क्रोद्धुं पुनरर्हसि ।
ऋचीकच्यवनादीनां पितॄणां संनिधौ पुरा ।
न योत्स्य इति संन्यस्य शस्त्रं न स्प्रष्टुमर्हसि ।

[ (l. 1) M4 त्व (for हि). D11 जातं. D13 शांतानां त्व; M4 प्रसन्नानां (for प्रशान्तानां). V2 महात्मवान्; B3 marg. as above. —(l. 2) Ñ2 V1 ॰शालीनां. V2 3 B4 क्रोध (for क्रोद्धु). D11 न च त्व क्रोद्धुमर्हसि (for the post. half). —(l. 3) D11 शुचीकच्यशनादीनां (for the prior half). V2 D11 ॰धौ त्वया, M4 राम सनिधौ (for सनिधौ पुरा). —(l. 4) Ñ2 B3 D10.13 M4 योत्स्यामीति (for योत्स्य इति). Ñ2 सत्यस्य (sic); V1 सत्यज्य; V2 मन्यस्व; D10 सध्यस्य (sic), D13 संकल्पा (च्) (for संन्यस्य). V3 न शस्त्रं (by transp.) (for शस्त्रं न). B4 स्पृष्टम्. Ñ2 B3 D10.13 शस्त्रमुत्स्रष्टुमर्हसि; D11 शास्त्र निक्षिप्तवानसि; M4 न क्रोद्धुं पुनरर्हसि (for the post. half). ]

8 a) Ñ2 V1–3 B D10 11.13 M4 तपोदमरतो; V4 तत्पाद-निरतो (for स त्वं धर्मपरो).—b) Ś1 Ñ2 V2–4 B Dt D2 3.5 (before corr. as in text)–13 कश्यपाय.—c) G4 धनम्; M4 च तम् (for वनम्).—d) D4 महेंद्रं; G1 महेंद्रः (for महेन्द्र-). Ñ2 V B1.3 4 D10.11.13 M4 स (Ñ2 V2–4 B3 D11 13 सं) न्यासं कृतवान्कथं (V3 M4 ॰वानसि).

9 D10 om. 9ab.—a) V2 स मे सर्व-; B4 मम सर्वं; D11 कथं मम; D13 मम सर्वे.—b) Ś1 B2 (marg. as in Ñ2 also) D1 2 5.9.12 सं (B2 स) प्राप्तः किं॰; Ñ2 V B1 3.4 D13 भूयो योद्धुमिहेच्छसि; D3.7 प्राप्तस्त्वं किं म॰; D11 भूयो वै योद्धुमिच्छसि; T2 M3 संप्राप्तोसि म॰; M4 पुनर्युद्धं चिकीर्षसि. —c) Ñ2 V B D10 13 ह्येतस्मिन्; T3 चैस्मिको (sic), G2 च कस्मिन्; M4 ह्येकस्मिन् (for चैकस्मिन्) D3 हरे (sic), T2 कृते (for हते) D13 राम (for रामे).—d) Ñ2 V B D10 13 जीवामः सर्वे एव हि.—After 9, Ñ2 V B D10 11 13 M4 ins. :

1357* प्रसीद भृगुशार्दूल त्रायस्व शरणागतम् ।
रामं पुत्रं न मे बालं राम संदग्धुमर्हसि ।

[ (l. 1) B3 (marg also) M4 त्राहि मां (for त्रायस्व). —(l 2) B1 om. (submetric) (for न). B4 om बाल. D11 transp. राम and बाल. D10 13 transp राम and राम. V3 त्व दग्धुम्, D11 निर्दग्धुम् (for सदग्धुम्) B1 मामक हतुमर्हसि: M4 रान दग्धुमिहार्हसि (for the post half). ]

B3 cont.

1358* अजेयः सर्वलोकानामप्रमेयबलं तव ।

10 a) Ñ2 V B D10 11.13 वदत्येवं. M4 श्रुत्वा दशरथस्येदं. —D1 reads 10c–11b in marg —c) Ś1 Dt D1–3.5–9 12 तु; D11 om. (submetric) (for [ए] व).—d) Ñ2 V1–3 B D10 13 भूयो राममभाषत; V4 M4 रामं भूयोभ्यभाषत; D2 राघवं चाभ्यभाषत.—After 10, M3 ins :

1359* रोषात्प्रस्फुरमाणोष्ठो रामं परमधन्विनम् ।

11 D1 reads 11ab in marg. (cf v l. 10).—a) Ś1 D1 3 5 7 9 12 द्वे एव; Ñ2 V2–4 B D11.13 द्वे इमे (by transp.); V1 ते इमे (note hiatus); D2 तदेष; D10 द्वे ॰मे (for इमे द्वे) Ś1 D1.3 5.9 12 रत्ने; Ñ2 V B D10 11.13 M4 राम; D2 रम्ये; D7 ह्येते (for श्रेष्ठे).—b) D3 दैवे (for दिव्ये). Ś1 D1–3 5 7 9 12 त्रै (D12 त्रि) लोक्य॰; Ñ2 V B D10.11.13 M4 लोकत्रये (Ñ2 V1 B2 4 M4 ॰य) श्रुते (B4 ॰तौ); Dt D6 8.14 T G4 M3 ॰पूजिते; Cg as in text.—d) D3.7 स्वकृते; D13 निर्मिते (for सुकृते)

12 a) Dt D6.8 अनु॰; D2 अवि॰; D3 7 अभि॰; Cm.g as in text (for अतिसृष्टं).—b) Ś1 त्र्यंबकस्य. D6 ॰युत्सवे; D14 G3 M2 युयुत्सते; G1 ॰युत्सते; Cg.k.t as in text (for युयुत्सवे). T3 त्रियंबकाय युत्सते.—For 11c–12b, Ñ2 V B D10.11 M4 subst.; D13 subst. l. 2 only for 12ab :

1360* विश्वकर्मकृते सारे अल्पवीर्यैर्दुरानमे ।
तयोरेकं त्र्यम्बकाय दत्तं राम युयुत्सवे ।

इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः ।
समानसारं काकुत्स्थ रौद्रेण धनुषा त्विदम् ॥ १३
तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ।
शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ॥ १४
अभिप्रायं तु विज्ञाय देवतानां पितामहः ।
विरोधं जनयामास तयोः सत्यवतां वरः ॥ १५
विरोधे च महद्युद्धमभवद्रोमहर्षणम् ।
शितिकण्ठस्य विष्णोश्च परस्परजयैषिणोः ॥ १६
तदा तज्जृम्भितं शैवं धनुर्भीमपराक्रमम् ।
हुंकारेण महादेवः स्तम्भितोऽथ त्रिलोचनः ॥ १७
देवैस्तदा समागम्य सर्षिसंघैः सचारणैः ।
याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ ॥ १८

G. I. 77. 21
B. I. 75. 19
L. I. 71 21

[ (l. 1) Note hiatus between the two halves V1 2 °वीर्यैं; V3 तुल्यवीर्यैं; V4 स्वल्प°; B1 °वीर्य- (for अल्पवीर्यैर्). V1 lacuna, V2 D11 दुरात्मने, V3 B3 दुरासदे (for दुरानमे). B4 अल्पवीर्यदुरासदे (for the post. half) —(l. 2) M4 एनत् (for एक). V4 समुत्सरे, M4 युयुत्सने (for युयुत्सवे) ]

—After $12^{ab}$, Ś1 D5 ins. ·

1361* त्र्यम्बकस्य च विष्णोश्च प्रायच्छन्नमितौजसोः ।

—$^{c}$) Ś1 पुरास्यते; D1–3 7 पुर(D1 °रा)घाते; D5 पुरायत्ते; D11 पुराणं तं; D12 पुराद्यंते; Cm k.t as in text (for त्रिपुरघ्नं). D8 नरश्रेष्ठं. Ñ2 V2 3 B2–4 D10 13 M4 त्रि(Ñ2 त्रै) पुरं जघ्नु(B4 °घ्नि)षे(D13 षो) देवैर्; V1 त्रिपुरं जघ्नघो (sic) देवैर्; V4 जघान त्रिपुरं तेन; B1 त्रिपुरं जिष्णवे देवैर्; D9 पुरनाशाय तच्छ्रेष्ठं, M2 त्रिपुरस्तं (corrupt) धनु·श्रेष्ठं. —$^{d}$) D13 तत्; M2 यस् (sic) (for यत्). —After 12, D4 ins $1362^{a}$.

**13** D4 om. $13^{ab}$ —$^{a}$) Ś1 D1–3 5.7.9 12 द्वितीयमपि (for इदं द्वितीयं). Ñ2 V B D10 13 M4 अपरं; D11 परमं (for दुर्धर्षं) —$^{b}$) M4 सुरासुरैः (for सुरोत्तमैः). Ś1 Ñ2 V B D1–3.5 7.9–13 विष्णवे यद्(D2 प्रद)दुः सुराः(B1 पुरा). —After $13^{ab}$, Ś1 (marg.) Dt D4(due to omission after 12).6 8.14 T G1.3.4 M2.3 Cm t ins.

1362* तदिदं वैष्णवं राम धनुः परपुरंजयम् ।

[ Cf. $21^{ab}$ D14 T1 3 G4 परमभास्वर (for परपुरंजयम्). ]

—$^{d}$) Ś1 D5 धनुषान्वितं.

**14** $^{a}$) Ś1 D1–3.5 7 दत्त्वा च; D4 तदा तु; D9 दत्त्वा तु; D12 दत्त्वा (submetric), T3 तदा ते; Cm.k.t as in text (for तदा तु). D2 7 सर्वे; D6 om (for सर्वाः). —For $13^{c}$–$14^{b}$, Ñ2 V B D10 11 13 M4 subst. :

1363* द्रव्यसारबलप्राणप्रमाणाकृतिभिः समम् ।
ब्रह्माणं यत्र पप्रच्छुः सुराः कौतूहलान्विताः ।

[ (l. 1) B1 M4 दिव्य- (for द्रव्य-). V4 -बल and -कृतिभि· (for -बल- and -[आ]कृतिभि· respy.). —(l 2) V4 D11 यत्र पप्रच्छ, B4 परि*प्रच्छु·; D10 यत्र *प्रच्छु· (for यत्र पप्रच्छु·). D11 सुराश्चैव महाबला; M4 जातकौतूहला· सुरा· (for the post. half). ]

—D5 om. (hapl.) $14^{c}$–$16^{b}$. D3 om. (hapl.) $14^{c}$–$15^{b}$. Ś1 reads $14^{c}$–$16^{b}$ in marg. —$^{c}$) Dt D2.8 (before corr ) शितिकंठश्च; D11 शंकरस्य च (for शितिकण्ठस्य) V1 विष्णो (lacuna) —T3 om (hapl ) $14^{d}$–$16^{c}$ —$^{d}$) Ñ2 V2–4 B D10–12 धनुषो(V3 4 B1 ष)श्च बला(B1 महा) बल, V1 धनुषो बलाबलं (submetric), D1 7 M4 धनुषोश्च बलाबले; D2.9 धनुषोस्य बलाबलं; D13 धनुषोर्यद्बलाबलं; T2 G1 3 M2 °परीक्षया, M3 पुरा बलपरीक्षया, Cv r m g k as in text.

**15** D5 T3 om 15, D3 om. $15^{ab}$; Ś1 reads 15 in marg. (for all cf v l 14). —$^{ab}$) Ñ2 V B D1 7 9–13 विदि(D11 °हि)त्वा च (V1 °थ; D1 7.11 12 तु, D9 °शु; D13 तं), D2 विदित्वा (submetric) (for तु विज्ञाय) Ñ2 V1 3 B1–3 D2.9–11 13 देवानां च (V1 B2 D11 स, V3 D2 9 प्र-) (for देवतानां) M4 जिज्ञासतां वचः श्रुत्वा देवानां तु प्रजापतिः —$^{cd}$) D3 ·योः (for तयोः). D2 3 7 9 G1 3 सत्त्ववतां (for सत्यवतां). Some MSS. (not included in the apparatus) सत्त्वपरीक्षया (for सत्यवतां वरः). Ñ2 V B D10 11 13 M4 विरोधयामास मिथो विष्णुं शंकरमेव च.

**16** T3 om. $16^{abc}$, D5 om $16^{ab}$, Ś1 reads $16^{ab}$ in marg. (for all cf. v.l 14) —$^{a}$) Ś1 Dt D4 6 8 तु; D1–3 7 9 12 सु- (for च). V4 B1 D11 महा- (for महद्). —$^{b}$) Ś1 रो·-; D1–3 7 9.12 लोम- (for रोम-) Ñ2 V B D10 13 अभव (V1 lacuna for व)त्तत्र देवयोः; D11 अभवत्सुरयोस्तदा. —$^{c}$) D11 शितिकंठश्च. —$^{d}$) Ñ2 V B D10 11.13 M4 -जिगीषया; D2 -जयैषिणः.

**17** Ñ2 V1–3 D10 M4 om. 17–18, D11 om. $17^{ab}$ B3 reads 17–18 in marg. G1.3 transp $17^{ab}$ and $17^{cd}$. —$^{a}$) Dt D6.8 T3 M2 तु (for तज्). Ś1 V4 B1–3 D1 3.5 7. 12 13 तस्य (B1 2 °त्र; D13 °चै) तत्पूरितं शैवं (D3 शैव-; D5 शब्दं); B4 ततस्तु पूरितं शैवं; D2 9 तस्य तत्पूरितस्यैव. —$^{b}$) B3 -पराक्रमः. —After $17^{ab}$, D3 7 ins. :

1364* हृतसारं बलवता विष्णुना प्रभ(D3 °स)विष्णुना ।

—$^{c}$) D2 11 हुंकारेण. Ś1 D1 5 9 11–13 महादेवं, V4 B1–3 D2 °देव (sic), Cg.t as in text (for °देवः). —$^{d}$) B1 स्तिमितो. Ś1 D5.11–13 स्तंभयामास केशवः; D1 जृंभित्वा च त्रिलोचनं; D2 9 जृं(D9 स्तं)भयित्वा त्रिलोचनं.

**18** Ñ2 V1–3 D10.11 M4 om., B3 reads in marg. 18 (for all except D11 cf. v l. 17). —$^{a}$) Ś1 V4 B D1–3. 5.7.12 दैवतैस्तु; D9 दैवतैः सु-; D13 देवैस्तैस्तु; M3 (after corr.

G. I. 77. 22
B. I. 75. 19
L. I. 71. 21

जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ।
अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ॥ १९
धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ।
देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ॥ २०
इदं च वैष्णवं राम धनुः परपुरंजयम् ।
ऋचीके भार्गवे प्रादाद्विष्णुः स न्यासमुत्तमम् ॥ २१
ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ।
पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ॥ २२
न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ।
अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ॥ २३
वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् ।
क्षत्रमुत्सादयं रोषाज्जातं जातमनेकशः ॥ २४

*sec. m.* as in text) देवैः सदा (for देवैस्तदा). —$^{b}$) V4 B4 ऋषि°; B3 ऋषिशीघ्रैः (for सर्षिसंघैः). D6 सवारणैः. —$^{d}$) G1.3 नरोत्तम; M2 सुरेश्वरौ (for सुरोत्तमौ). —For 18$^{cd}$, Ś1 V4 B D1–3.5.7.9.12.13 subst.:

1365* याचितो न प्रहृतवान्विष्णुर्बलवतां वरः ।

[V4 यातितो (sic). V4 प्रकृतिवान्; D3 प्रहृतता (sic); D7 प्राहरत्त (for प्रहृतवान्). D7 वर (for वरः) V4 सत्यपराक्रम; B3.4 सत्यवता वर ]

**19** $^{a}$) G2 जृंभि॰. Cg तद् (as in text) T3 तद्धनुं; M2 तु धनुर्; M4 तत्र तं (for तद्धनुर्). —$^{b}$) G1 (after corr. as in text) -परायणैः (for -पराक्रमैः). —For 19$^{ab}$, Ś1 D1–3.5.7.9.12.13 subst.:

1366* जिते हि धनुषा सार्धं शिवे विष्णुपराक्रमात् ।;

[Ś1 जितो हि, D1.3.7 जृभिते; D2.9 स्तभिते (D9 °तो) (for जिते हि). D2 सार्धे (for सार्धं). D9 शिवो. D13 -पराक्रमं.]

while Ñ2 V B D10.11 subst.:

1367* विजृम्भितं तत्र दृष्ट्वा सर्व विष्णुबलात्तदा ।

[V1 त तु (for तत्र). V3 विकृतं तत्र त दृष्ट्वा (for the prior half) B1 D10 सर्वे; D11 सर्व- (for सर्वं). Ñ2 -वनात्; V4 -बलं (for -बलात्).]

—$^{d}$) Dt D6.8 तथा; Ck as in text (for तदा). Ñ2 V B D10.11.13 M4 विबुधा धनुषा (V2 ब्रह्मणा; D10 * * *) सह; D7 देवतर्षिगणास्तदा. —After 19, T2 M3 and K ed. ins.:

1368* पूजयित्वा ततो विष्णुमामन्त्र्य च पिनाकिनम् ।
ब्रह्मेन्द्राग्नीन्पुरस्कृत्य नाकपृष्ठं ययुस्तदा ।
[(l. 2) T2 ब्रह्मेद्राग्नी, K. ed. ब्रह्मेद्रादीन्.]

**20** $^{a}$) Cv.r.m.k.t as in text (for धनू रुद्रस्) Ś1 D1–3.5.7.9.12 ततस्(Ś1 °दा) तु (D2 तं) रुद्रः; G4 damaged (for धनू रुद्रस्तु). Ñ2 V2.4 B2.3 D10.11 M4 धनुस्तज्जृंभितं (D11 °स्तं [sic] जृंभितो) रुद्रो; V1.3 D13 धनुस्तु जृंभितं रुद्रो(V3 रात्रौ); B1 धनुस्त*(illeg.)यितं रुद्रो; B4 धनुर्विजृंभितं रुद्रो; M3 तद्धनुः शंकरः क्रुद्धो. —$^{b}$). Ñ2 V2 B3 D10 विदेहे सु-; V4 विदेहस्य (for विदेहेषु). —$^{c}$) V4 देवतातस्य; B3 (marg also) Dt देवराजस्य. Ś1 D1–3.5.7.9.11.12 देवराता (D2.3 [before corr.] 9 °जा)य देवेशो. —$^{d}$) D12 om. ददौ. Ś1 D1–3.5.7.9–12 स न्यासमायुधं, Ñ2 V1–3 B D13 M4 न्यासमनुत्तमं; V4 न्यासमुत्तमं (submetric). —After 20, M3 ins.

1369* तद्धनुर्देवरातोऽपि शिरसा गृह्य पूजयत् ।
भग्नं तन्मनुजश्रेष्ठ त्वया पैनाकमुत्तमम् ।

**21** $^{a}$) V4 M3.4 तु; Cm t as in text (for च). —$^{b}$) Ś1 D1–3.5.7.9.12 परमपूजितं; Ñ2 V B D10.11.13 M4 अभ्य(V1.3 °च्य)धिकं ततः, Ck.t as in text (for परपुरंजयम्). —T1 damaged from र्ग up to ति in 22$^{b}$. —$^{c}$) V3 D14 भार्गवं. Ñ2 V B D10.11.13 M4 न्यासं (for प्रादाद्). —$^{d}$) M3 विष्णोः. Dt D3.4.8 T2.3 संन्यासम् (for स न्यासम्). ❀ Ck स्वस्य स्वीयस्य न्यासः स्वन्यासः । ❀ Ś1 आयुधं (for उत्तमम्) Ñ2 B3 न्यदधीद्विष्णुरूर्जितं; V1.3 B2 D11 नि(D11 वि)दधौ(V1 °दधे; V3 °र्दधौ) विष्णुरूर्जितं; V2.4 B1 D10 M4 न्यदधा(D10 °ध)द्विष्णुरूर्जितं (V2 °तः); B4 न्यदधाद्विष्णुवर्जितं; D13 निदधेदनुरूर्जितं.

**22** T1 damaged up to ति in $^{b}$ (cf. v.l. 21). —$^{a}$) D11 शुचिको (for ऋचीकस्). Ñ2 V B D10.11.13 M4 [ऽ]पि; D2.3 सु- (for तु). —$^{b}$) Ś1 D1–3.5.7.9.12 पुत्रायाद्भुतकर्मणे; Ñ2 V B D10.11.13 M4 पुत्रायामिततेजसे. —$^{c}$) Ś1 V1 पुत्रे; Ñ2 V2–4 B D1–3.5.7.9–13 पित्रे (for पितुर्). V2 स हि (for मम) M4 पितुर्मे न्यदधाद्राम. —$^{d}$) T3 जमदग्निर्. Ś1 Ñ2 V B D1–3.5.9–13 कार्मुकं ज(V1 B1.3 य; D5 जा)मदग्न(D9 °ग्न्य)ये.

**23** $^{a}$) V3 om. मे (submetric). Ñ2 V1.2.4 B D10.11.13 G2 M1.3.4 तु (D11 M3 च) पित(G2 °*)रि (for पितरि मे). —$^{b}$) D1–3.5.7.9.12 -दम- (for -बल-). Ñ2 V1–3 B D10.11.13 मदीये शम (V1 B1.4 सम; B3 न स; D11 साम) मास्थिते; V4 मदीये स मया* (lacuna) ते; M4 तस्मिन्वै शममास्थिते; Cm k as in text. —$^{cd}$) V4 यज्वनो (for अर्जुनो). Dt D6 तत्र (for मृत्युं). Ñ2 V2.3 B3.4 D10.11.14 प्राकृतिं (D14 °तं) (for प्राकृतां). V1 आत्मनः (for आस्थितः). M4 कार्तवीर्येणार्जुनेन न्यस्तशस्त्रो निपातितः.

**24** $^{a}$) Ś1 D1–3.5.7.9.12 वधमप्रतिमं श्रुत्वा; Ñ2 V B D10.11.13 M4 तं रामा(V1.4 D11 °म; V3 B1 °मो)स(V1 *)दृशं श्रु(B4 म)त्वा. —$^{b}$) Ś1 D1–3.5.7.9.12 तस्य महात्मनः; Ñ2 V B D10.11.13 M4 तत्र (V4 D13 °स्य) वधं मया; D14 (marg. also as in text) कृत्वा सु°; G2 °त्वा विदारुणं (for श्रुत्वा सुदारुणम्). —After 24$^{ab}$, M3 ins.

पृथिवीं चाखिलां प्राप्य काश्यपाय महात्मने ।
यज्ञस्यान्ते तदा राम दक्षिणां पुण्यकर्मणे ॥ २५
दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः ।
श्रुतवान्धनुषो भेदं ततोऽहं द्रुतमागतः ॥ २६
तदिदं वैष्णवं राम पितृपैतामहं महत् ।
क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ॥ २७
योजयस्व धनुःश्रेष्ठे शरं परपुरंजयम् ।
यदि शक्नोषि काकुत्स्थ द्वन्द्वं दास्यामि ते ततः ॥ २८

G. 1. 77. 32
B. 1. 75. 28
L. 1. 71. 32

## इति श्रीरामायणे बालकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

1370* अमर्षो मे महानासीत्सर्वलोकभयप्रदः ।
शाखाभिः सुहुतो विप्रैर्यथा मखमुखे प्रभुः ।
अशक्नुवानस्तं क्रोधं धनुर्गृह्य परं शुभम् ।

—D3 om. 24$^{c}$–25$^{b}$. —$^{c}$) Ś1 D5 12 क्षा( D12 क्ष )त्रमुत्सादितं क्रोधाज् ; Ñ2 V B D10.11 13 M4 असकृत्सू( B4 °न्मृ )दितं क्ष ( D13 क्षा )त्रं; D1.2.7.9 क्षत्रमुत्सादितं रोषाज्; D4 °मुत्थापय-न्रोषाज्; Ct as in text. —T1 damaged from तं up to य in 25$^{c}$. —$^{d}$) V1 पुरा ( for first जातं ). Ś1 B4 D1.2 5.7 9 11.12 अनेकधा; Ñ2 V B1–3 D10 13 अनेन हि; Cg as in text ( for अनेकशः ). M4 धनुषोस्य मया बलात्.

25 D3 om. 25$^{ab}$, T1 damaged up to य in $^{c}$ ( for both cf. v.l. 24 ). —$^{a}$) Ck.t प्राप्य ( as in text ). Ś1 D1.2 5 7 9 12 अखिलां जित्वा( D5 दत्त्वा ), D4 त्वखिलं प्राप्य; G1.3 अखि° ( for चाखिलां प्राप्य ). —$^{b}$) Ś1 D1.2 4 5 7–9 12 T2 कश्यपाय. —D2 om. 25$^{c}$–26$^{b}$. —$^{c}$) Ś1 D3.7 [ ऽ ]हमददं; Dt D6.8 [ ऽ ]ददं राम; D5 12 [ ऽ ]हमददां; G1.3 नरश्रेष्ठ; M3 ददौ राम ( for तदा राम ). D1 यज्ञप्रांते महदिदं. —$^{d}$) Ś1 पुत्रकर्मणे.

26 D2 om. 26$^{ab}$ ( cf v.l. 25 ). —$^{a}$) Ś1 M3 गत्वा; D1 3 5.7.12 ततो ( for दत्त्वा ). Ś1 D9 M3 -निलयं; D1 3 5.7 12 -निलयात् ( for -निलयस् ). —After 26$^{ab}$, D5 ins. 1374*, while D14 T G4 M3 ( *inf. lin sec m* ) ins. :

1371* स्थितोऽस्मि तस्मिंस्तप्यन्वै सुसु( D14 °मु )खं सुरसेविते ।
अद्य तूत्तमवीर्येण त्वया राम महाबल ।

—D5 om. 26$^{c}$–28. Ś1 om. ( hapl ? ) 26$^{cd}$. —$^{c}$) Dt D6.8G2 M1 श्रुत्वा तु; D9 तच्छ्रुत्वा; D14 श्रुतं वा; G1 श्रुत्वैष; G3 श्रुत्वैव ( for श्रुतवान् ). —After 26$^{c}$, D14 T G4 ins. ·

1372* विस्मितानां नभःस्थले ।
भाषतां देवसंघानां.

[ ( l. 1 ) T3 नभस्तले. —T1 damaged from l. 2 up to रा in 27$^{a}$. ]

—$^{d}$) D1.2 त्वरितस्त्व( D2 °श्चा )हमागतः; D3 7 त्वरितश्च समागतः; D12 त्वरितस्तेन वागतः; T2 ततोहं द्रष्टुमागतः, G2 M1 ततो द्रुतमुपागतः. —For 25–26, Ñ2 V B D10 11.13 M4 subst. :

1373* पृथिवी चापि विजिता मयास्य धनुषो बलात् ।
दत्ता चेयं विनिर्जित्य कश्यपाय महात्मने ।
कश्यपाय च दत्त्वेमामखिलां सागराम्बराम् ।
न्यस्तशस्त्रस्तपस्तप्तुं गतोऽहं मेरुपर्वतम् ।
तत्र संन्यस्तशस्त्रोऽपि तपस्यभिरतोऽप्यहम् । [ 5 ]
श्रुत्वैव धनुषो भङ्गं द्रष्टुं त्वां समुपागतः ।

[ ( l. 1 ) B1 [ अ ]न्य ( for [ अ ]पि ). D11 मायन्य ( sic ) ( for मयास्य ). M4 धनुषोस्य पराक्रमात ( for the post. half ). —( l. 2 ) B4 दत्त्वा. V1 2 M4 काश्यपाय Ñ2 marg , D11 वसुंधरा; M4 महामुने ( sic ) ( for महात्मने ) —( l. 3 ) M4 काश्यपाय. M4 पृथिवी ( for अखिलां ). D11 दत्त्वा मामखिलामुर्वीं सशैलवनकानन —( l 4 ) V3 हेमपर्वत. B2 महेंद्र पर्वत गतः ( for the post. half ) —( l. 5 ) V2 तत· ( for तत्र ). Ñ2 B3 4 D10 [ ऽ ]स्म्यह, B1.2 D11 ह्यह, D13 [ ऽ ]भव ( for ऽप्यहम् ). V4 तपस्याभि° ( for the post. half ). —( l 6 ) D13 श्रुतस्य ( sic ) ( for श्रुत्वैव ). B1 भग्न ( for भङ्गं ) M4 अभ्युपागत ]

27 D5 om. 27; T1 damaged up to रा in $^{a}$ ( for both cf. v.l. 26 ). Ś1 reads 27–28 in marg. —$^{a}$) Ś1 Dt D6 8 एवं; Cg as in text ( for इदं ). D2 राम परमं; D11 °वं दिव्यं ( for वैष्णवं राम ). —$^{b}$) Ñ2 V B1.3 4 D10 11 13 पितृपर्या ( V3 °पाणि )गतं, D2 पैतृपितामहं; Cg.k.t as in text ( for पितृपैतामहं ) Ñ2 V B D1–3 7.9–13 M4 मम ( for महत् ). —$^{c}$) M4 क्षात्रं बलम् ( for क्षत्रधर्मं ). Ñ2 V1.2 4 B D10.11.13 M4 उपाश्रित्य; V3 समाश्रित्य; Ck as in text ( for पुरस्कृत्य ). —$^{d}$) Ñ2 V B D10.11.13 M4 गृहाण; D6 गृ⁎⁎ ( for गृह्णीष्व ). Ñ2 V1.2 4 B1.3.4 D10 उद्यतं; M4 ऊर्जितं ( for उत्तमम् ).

28 D5 om. 28 ( cf. v l. 26 ). Ś1 reads 28 in marg. ( cf. v.l. 27 ). —$^{a}$) Ś1 धनुःश्रेष्ठं; Ñ2 V B D10.11.13 गृहीत्वा च; D1–3.7.9 महाबाहो; G1.3 नरश्रेष्ठ; M4 गुणेनैव

७५

G. I. 77 33 B. I. 76 I L. I. 71 32 श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथिस्तदा ।
गौरवाद्यन्त्रितकथः पितू राममथाब्रवीत् ॥ १
श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव ।
अनुरुन्ध्यामहे ब्रह्मन्पितुरानृण्यमास्थितः ॥ २
वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव ।
अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम् ॥ ३
इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य वरायुधम् ।
शरं च प्रतिसंगृह्य हस्ताल्लघुपराक्रमः ।
आरोप्य स धनू रामः शरं सज्यं चकार ह ॥ ४
जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीद्वचः ॥ ५

(for धनु: श्रेष्ठे) D12 योजयाशु धनुश्श्रेदं. —$^{b}$) Ñ2 V B D10 11 13 M4 शरेण (V2 तदिदं) रघुनंदन; Dt शरं प..रंजयं; D1–3.7 9 12 शरेणामिततेजसा. —$^{c}$) D3 7 यथा (for यदि). Ś1 V1 4 B1 D2 3.12 Ct शक्तोसि; Ñ2 संधसि (sic), V2 शक्योसि; V3 B3 M4 शक्ष्यसि; D10 शक्ष्यति; D13 शक्यसि (sic) (for शक्नोषि). Ñ2 V B D10 11.13 M4 संधातुं; Cm as in text (for काकुत्स्थ). —$^{d}$) Ñ2 V B D1 3.7 9–12 14 M4 युद्धं; D13 इदं (for द्वन्द्वं) Ś1 om. ते (submetric). V4 तत् (submetric), B1 पुनः, D9 [ऽ]नघ, D14 T G4 तदा; Cg.k as in text (for ततः). —After 28, Ś1 D5 (due to omission after 26$^{ab}$) 11.12 ins.

1374* एवं ब्रुवाणे वचनं महामुनौ
युगान्तकालोच्छ(च्च)लिताम्बुभैरवम् ।
क्षणेन सर्वं सचराचरं जग-
द्भयाच्चकम्पे सह देवदानवैः ।

[(l. 2) Ś1 -काले छलिताब्धिकर्मणि. —(l. 4) Ś1 -मानवै (for -दानवै:).]

Colophon. Ñ2 V B D10.13 om. (continue the Sarga). —*Kāṇḍa name*. Ś1 D1.11 om. D3 अयोध्या°. —*Sarga name*: Ś1 D1 3 5.9.12 राम(D1 9.12 om.) रामसमागमो; D2 7 परशुरामसमागमो; D11 समागमे परशुरामवाक्यं. —*Sarga no.* (figures, words or both) Ś1 D3 5.11 12 om. Dt D4.6.8.14 S (except M4) 75, D1 51, D2 49, D7 53; D9 78, M4 73. —After colophon, T2 concludes with श्रीरामचन्द्राय नमः; G1 2 4 M2 श्रीरामाय नमः; G3 श्रीमते रामानुजाय नमः; M1 श्रीरामा....

## 75

☞ Ñ1 missing Sarga 75 (cf. v.l. I. 66. 10). Ñ2 V B D10 13 continue the previous Sarga. Ñ2 V B D10 11 13 subst. 1379* for the whole Sarga (B2 reads St 1 as in text for l. 1 and 2 of 1379*), while M4 subst l. 1–22, l. 29–30 and l. 39–46 of 1379* for 1–9, 14 and 21–23 respy. and the substitute-passage is given at the end of the Sarga.

1 $^{a}$) Ś1 B2 D1–3.5.7.9.12 तच्छ्रुत्वा (by transp.); Dt D6.8 T1 M3 श्रुत्वा तु (for श्रुत्वा तज्.). Ś1 D5 12 वचनं तस्य; M3 (*inf. lin. sec. m* also as in text) राजसिंहस्य (for जामदग्न्यस्य). —$^{b}$) Ś1 B2 D1–3 5 7 9 12 दशरथात्मजः. —$^{d}$) Ś1 B2 D1–3.7 9.12 M3 रामो रामम्; G1 3 जामदग्न्यम् (for पितू रामम्). D5 रामो राम : थाब्रवीत्.

2 $^{ab}$) T3 कृत° (for श्रुतवान्). Dt D3 6 8 14 T M1 अस्मि; D7 अपि; Cm.g.k as in text (for अस्मि). Ś1 D1–3 5 7 9 12 ते (for यत्). D8 T2 °स्मि; T1 damaged for नसि (for कृतवानसि). D4 transp. श्रुतवानस्मि and कृतवानसि. Ś1 D1–3.5 7 9 12 कृतं यत्तत् (D3 सत्रे [sic], D7 °त्ते) पुरातनं (for $^{b}$). —G2 om (hapl.) 2$^{c}$–3$^{b}$. —$^{c}$) Ś1 D1–3 5 7 12 न ते (D5 ह्य)सूयामि ते (D1 तद्; D12 वै), D6 8 T1.3 Cv.t अनुरुध्यामहे; D9 अनुरुंध्यामि ते; M3 अनुबंध्यामहे; Cr m.g as in text; Ck अनुरुंधामहे. —$^{d}$) Ś1 D1–3 5 7 9 12 °कारिणः (D12 °णा); D4.6 14 T1.2 G4 M1 3 Cv r m °मास्थितं, Cg.k.t as in text (for आनृण्यमास्थितः).

3 G2 om. 3$^{ab}$ (cf. v.l. 2). —$^{a}$) Ś1 D1–3 5 7.12 इदं यत्तु (D2 °त्तत्) (for इवाशक्तं). —$^{b}$) D5 12 क्षत्रं (for क्षत्र-). D2 M4 भार्गवं (sic). Ś1 क्षत्रमुत्सादितं त्वया. —After 3$^{ab}$, Ś1 ins. l 6, while D9 ins. l 7 of 1379* —$^{c}$) G2 मे जातः; M2 मां राम; Ct as in text (for मे तेजः). Ś1 D5 12 प्रतिगृह्णामि तेजोस्य; D1–3.7 9 परिगृह्णामि ते तेजः —$^{d}$) T1 damaged for पश्य. Ś1 D1–3 5 7 9 12 पश्य मे तत्र पौरुषं. —After 3, D1 ins. l. 6–8 of 1379*.

☞ Ck is lost from st. 4 up to the end of this Sarga on a missing folio in the exemplar.

4 $^{a}$) D4.7.12.14 उक्ता (for उक्त्वा). Ś1 D1–3.5.7.9.12 वाक्यं (for क्रुद्धो). —$^{b}$) K. ed शरासनं (for वरायुधम्). —$^{c}$) Ś1 D5.12 स तच्च (D12 °था); D2 शरं वा (for शरं च). Ś1 D1–3 5 7.9 12 [अ]प्रतिमं हस्ताद्; Dt D8 °जग्राह (for प्रतिसंगृह्य). —$^{d}$) Ś1 D1–3.5.7 9.12 गृहीत्वाशु- (Ś1 °त्वात्र, D3 7 °त्वा स) (for हस्ताल्लघु-). Ś1 D9 °मात्; D3.7 °मं (for -पराक्रम:). —$^{ef}$) T1 damaged स ध; G1 3 च धनू (for स धनू). D4 T3 G1.2 Cr सज्जं (sic), Cv m.t as in text (for सज्यं) Ś1 D1–3.5.7.9 12 आरोप्य रामस्तु (D2 °मः सु; D9 °मः स) धनुः शरमारोप्य (D1–3 7 °योज्य) कांचनं.

5 $^{a}$) Ś1 D2 5.9 12 असंभ्रांतो; D3.7 समुद्दिश्य (for ततो रामं.) D1 जामदग्न्येष्वसंभ्रांते. —$^{b}$) Dt D6 8 G2 M1 इदं

ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।
तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥ ६
इमां वा त्वद्गतिं राम तपोबलसमार्जितान् ।
लोकानप्रतिमान्वापि हनिष्यामि यदिच्छसि ॥ ७
न ह्ययं वैष्णवो दिव्यः शरः परपुरंजयः ।
मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८
वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः ।
पितामहं पुरस्कृत्य समेतास्तत्र संघशः ॥ ९
गन्धर्वाप्सरसश्चैव सिद्धचारणकिंनराः ।
यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १०
जडीकृते तदा लोके रामे वरधनुर्धरे ।
निर्वीर्यो जामदग्न्योऽसौ रामो राममुदैक्षत ॥ ११
तेजोभिर्हतवीर्यत्वाज्जामदग्न्यो जडीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२
काश्यपाय मया दत्ता यदा पूर्वं वसुंधरा ।
विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥ १३
सोऽहं गुरुवचः कुर्वन्पृथिव्यां न वसे निशाम् ।
इति प्रतिज्ञा काकुत्स्थ कृता वै काश्यपस्य ह ॥ १४
तदिमां त्वं गतिं वीर हन्तुं नार्हसि राघव ।
मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ १५
लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया ।
जहि ताञ्शरमुख्येन मा भूत्कालस्य पर्ययः ॥ १६

G. 1. 77. 48
B. 1. 76. 16
L 1 71. 48

(for वचः). Ś1 D1–3 5 7 9.12 राघवो वाक्यमब्रवीत्. —After 5, D2 ins l. 6–8 of 1379*.

**6** a) V4 पूज्योसि; D9 G2 4 M1 3 मे पूज्यो (by transp). —b) T1 damaged for मित्र in विश्वामित्र. —c) D9 तस्मान्मुक्तो. Ś1 D1–3 5 7 12 शक्तोपि(Ś1 °सि) ते न मुंचेयम्. —d) Ś1 D1–3 5 7 12 अहं; D9 मोक्षे (for मोक्तुं)

**7** a) Ś1 इमांस्. Ś1 D5 तव कृते; D1 3 7 9 12 तव गतिं, D2 प्राप गतिं; D4 च त्व° (for वा त्वद्गतिं). T1 वापि (for राम). —b) Ś1 D3.5 12 -समन्वितां (Ś1 °तान्), D1 2.4 -समर्जितां; D7 9 T3 (before corr as in text) -समार्जितां; T2 -समार्चितान्. —c) T1 damaged for वापि. —d) Ś1 वारयामि; D1–3 5.7 9 12 वधि°; D4 दहि°; M3 हरि° (for हनिष्यामि). Ś1 D5 M3 यदीच्छसि; Dt D6.8 [इ]ति मे मतिः; D1–3 7 यथेच्छसि; Cm.g.t as in text. ❀ Cg · यदीच्छसीति पाठो युक्तः । ❀

**8** a) T2 M3 [अ]हं (for [अ]यं) —b) D1 9 -पुरंजय. —c) G1 मोघं; Cm g.t as in text (for मोघः). D14 तपति (metathesis) (for पतति). Ś1 D1–3.5.7.9.12 वीरेषु (for वीर्येण). —d) D14 T G4 पर-; Ct as in text (for बल-). —After 8, G2 M1 ins.:

1375* इति ब्रुवति काकुत्स्थे भार्गवं प्रति रोषिते ।
शतक्रतुमुखा देवाः पुरस्कृत्य चतुर्मुखम् ।

**9** a) M3 -धनं; Cm as in text (for -धरं). —b) Ś1 D1–3.5.7.9.12 देवाः सर्षिगणास्तदा (D5 °था). —d) Ś1 Dt D1–9.12 G2 M1–3 सर्वशः (for संघशः).

**10** b) D9 सिद्धाश् (for सिद्ध-). D4 -किंनरचारणाः (by transp.); D7 °पन्नगाः (for -चारणकिंनराः). —c) T2 G4 M2 -संघाश् (for -नागाश्). M4 नागराक्षसयक्षाश्च (by transp.). —d) D14 T G4 द्रष्टुं तन् (by transp.); Cg.t as in text. Dt मह * द्भुतं; D1 °दुद्भुतं.

**11** a) D1–3 5 7 12 M4 एकी(M4 मंदी)भूते. —b) Ś1 D1–3 5 7.9.12 चापि (for वर-). —c) D1–3 7 G2 M1 जामदग्न्योथ(D2 °ग्न्यस्तु). Ś1 D5 12 M4 निर्वीर्यं जामदग्न्येथ (M4 °ग्न्ये च), D9 निर्वीरो जामदग्निस्तु. —d) D7 उदीक्षितः (for उदैक्षत).

**12** a) Dt D6 8 °र्गत-; D1–3 5 7.9 12 M4 °पहत-; M3 *inf lin. sec. m.* (for तेजोभिर्हत-). D5 12 -वीर्यश्च (for -वीर्यत्वाज्). Ś1 यक्षराक्षसनागाश्च (= 10c). —After l. 22 of 1379*, B3 (after l 25) 4 ins. (var.) the lines of 10c–12b. —d) D1 5 8 9.12 T3 मंदमंदम्.

**13** a) Dt D1–5 7.12 कश्यपाय. Ś1 D2 9.12 G1.3 पुरा; G2 M1 4 (last two after corr. *inf lin. pr. m* as in text) महा (for मया). —b) Ś1 D2 9.12 मया राम; D1.3.5.7 पुरा राम; D4 T3 यथापूर्वं (for यदा पूर्वं). —c) Ś1 वास्त°; D3 *स्त° (for वस्तव्यम्). —d) G2 *ति (for इति). Ś1 D5 वै; D12 om. (submetric) (for मां) D1–5 7 12 कश्यपो.

**14** b) Ś1 D1.2.5 12 नि(D1.2 न)वसाम्यवशो(D1 2 °निशं) भुवि; D3.7 9 नि(D7 9 न)वसामि निशां भुवि. —c) Ś1 D1–3.5.7 12 हीनप्रतिज्ञः; Dt D6.8 M3 तदा प्रभृति; D4 तथा प्र°; D9 हीनप्र°; G1–3 M1 तदा प्र°; M2 मया प्र° (for इति प्रतिज्ञा). —d) Dt D6.8 G2 M1 मे (for वै). D4 कश्यपस्य. D14 T1.2 सा; G1.3 तु; G2 हा; Ct as in text (for ह). Ś1 D1–3 5.7.9.12 तस्य (D1 तस्मात्; D2.9 तथा; D3.7.12 न स्यां) कश्यप(D3 °*)संस्थया(D9 °स्कृता).

**15** a) Dt D6 8 Ct ताम्; T3 त्वध् (sic), Cg as in text (for तद्). Dt D6.8 G1.3 मद् (for त्वं). D4 G1.3 M2.3 राम (for वीर). Ś1 D1–3 5.7.9 12 M4 इमां मम गतिं तात (M4 वीर). —b) D4 हतुं (for हन्तुं). —c) Ś1 D1–3.5.7.9.12 M3.4 °जवो; G3 नद्यो° (sic), Cv.t as in text (for मनोजवं). —d) D2 माहेंद्रं पर्वतोपमं.

**16** a) D12 लोकांस् (for लोकास्). D12 त्वप्रतिमान्; D14 त्वत्° (for त्वप्रतिमा). D3 राजन् (for राम). —b) D12

G. 1. 77. 49 B. 1. 76. 17 L. 1. 71 48
अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम् ।
धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परंतप ॥ १७
एते सुरगणाः सर्वे निरीक्षन्ते समागताः ।
त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ १८
न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥ १९
शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत ।
शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥ २०
तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ।
रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥ २१
ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा ।
सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २२
रामं दाशरथिं रामो जामदग्न्यः प्रशस्य च ।
ततः प्रदक्षिणीकृत्य जगामात्मगतिं प्रभुः ॥ २३

## इति श्रीरामायणे बालकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

निर्जितांस्. Ś1 D4 G1.3 M2 4 तपसा निर्जिता (by transp.). —After $16^{ab}$ D3 7 ins :

1376* उदीच्यां दिशि ये म्लेच्छा रौद्रा ये क्रूरकारिणः ।

—$^{c}$) D2 [अ]न्यान् (for तान्). Ś1 -मोक्षेण (for -मुख्येन). —$^{d}$) D4 M4 °विपर्यय: (for कालस्य पर्ययः).

17 $^{a}$) Ś1 D2–5.7–(D8 before corr.)9 12 T3 G1.3 M2 3 Cg अक्षयं; M1 अक्षरं; Cm t as in text. —$^{b}$) Ś1 D1–3 5.7.9.12 जाने त्वाहं; M3.4 °मि त्वा (for जानामि त्वां). Ś1 D1 3–5.7.9.12 T3 G1–3 M1 Cm सुरोत्तम; D2 सुसुत्तमं (sic), M4 सनातनं (for सुरेश्वरम्). —$^{c}$) T3 धनुषश्च; Cm as in text. D5 परामर्शः. —$^{d}$) G2 मे (for ते).

18 $^{a}$) D5 गुणगणा· (for सुर°). M4 राम (for सर्वे). —$^{b}$) D12 ***न्ते; M2 प्रतीक्षंते. D12 (after corr as in text) समागमाः. —$^{cd}$) T2 तम् (for त्वाम्). D2 यान्यहं प्रतिकर्माणि न प्रतिद्वंद्वमाहवे.

19 $^{a}$) D4 राम; D8 तव (for मम). —$^{b}$) M4 पीडा (for व्रीडा). Ś1 D1–3.5 7 9 12 व्रीडा भवति कर्हिचित्. —$^{c}$) Ś1 त्रिलोक- (for त्रैलोक्य-). —$^{d}$) M4 जितस्यापि समागमे.

20 $^{a}$) Ś1 D1–3.5 7.9 M4 चा°; D12 वा° (for अप्रतिमं). M4 लोके (for राम). —$^{b}$) Ś1 D1–3.5 7.9.12 धार्मिक; M3.4 राघव (for सुव्रत). —$^{c}$) D5 G4 °मोक्षं; M4 °मोक्षाद्; Cg.t as in text (for शरमोक्षे). D4 °ष्येहं (for गमिष्यामि). —$^{d}$) D2 G4 पर्वतोपमं. —After l. 38 of 1379* B4 ins. (var.) the lines of 20.

21 D14 reads 21 in marg. —$^{a}$) T2 ब्रुवतु (sic). Ś1 D1–3 5.7.9.12 रामे च (Ś1 °पि; D1.2.9 वि; D5.12 °ति) ·ब्रु(D3 *)वति ह्येवं. —After 21, Dt D4.6.8.14 S (except M4) Cg.t ins. :

1377* स हतान्दृश्य रामेण स्वाँल्लोकांस्तपसार्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ।

[ (l. 1) D14 T2 स हितान् (sic). T3 दृष्ट (sic) (for दृश्य). D4 14 तपसोर्जितान् ]

22 $^{a}$) Ś1 D1–3 5 7 9.12 आसन् (for ततो). —$^{b}$) Ś1 D3.5 प्रतिदि(D3 °*)शस्; D1.2.7 स प्रदि°; D9 G4 च प्रदि°; D12 G1 3 च विदि° (for चोपदिशस्). T3 G4 M3 तदा (for तथा). —After $22^{ab}$, Ś1 D1–3.5 7.9 11 (after l. 44 of 1379*).12 ins

1378* प्रववुश्च शिवा वाता मृगाश्च शुभशंसिनः ।

[ D11 ववुश्चापि; D12 प्रबभुश्च D11 om. मृगाश्च. D5 शुभशासना·; D9 शिवसज्ञिता·.]

—B3 4 ins. (var.) the line of $22^{cd}$ after l 44 of 1379*. —$^{c}$) M2 देवाः (for सुराः). Ś1 D1–3 5.7.9.12 चैव (for रामं) —$^{d}$) Ś1 D1–3 5.7.9.12 नृपात्मजं; D4 मुदान्विताः (for उदायुधम्).

23 $^{a}$) Ś1 D1–3 5.7 9 12 transp. रामं and रामो. —$^{b}$) Dt D6.8 प्रपूजितः; Ctp °स्य ह (for प्रशस्य च). Ś1 D1–3 5. 7.9.12 प्रशस्य रघुनंदनं. —$^{c}$) M3 तदा (for ततः) D4 14 T2 3 G1.3 4 प्रदक्षिणं (G1 °णी) कृत्वा; Ct as in text Ś1 D1–3.5. 7 12 प्रदक्षिणीकृत्य ततो (by transp ), D9 प्रदक्षिणं कृत्य ततो. —$^{d}$) Ś1 D1–3 5 7 9.12 तदा (for प्रभुः). —For Sarga 75, Ñ2 (Ñ1 missing) V B D10 11.13 subst , while M4 subst. l. 1–22, 29–30 and 39–46 for 1–9, 14 and 21–23 respy , whereas Ś1 D9 ins. l. 6 and 7 respy. after $3^{ab}$, D1 ins. l. 6–8 after 3, D2 after 5 :

1379* (1) तच्छ्रुत्वा जामदग्न्यस्य रामो रामस्य भाषितम् ।
गौरवाद्यन्त्रितस्तस्य पितुर्वचनमब्रवीत् ।
(2) श्रुतवानस्मि ते कर्म घोरं यत्त्वया कृतम् ।
न तेऽभ्यसूये तत्कर्म पितुरानृण्यकारिणः ।
वीर्यशक्तिपरिक्षीणं क्षत्रमुत्सादितं त्वया ।
मातिक्रूरेण तेन त्वं कर्मणा गर्वितो भव ।
($3^{cd}$) आनयैतद्धनुर्दिव्यं पश्य मे बलपौरुषम् ।
क्षत्रस्यापि महत्तेज पश्याद्य भृगुनन्दन ।
($4^{ab}$) इत्युक्त्वा तद्धनुर्दिव्यं रामो जग्राह वीर्यवान् ।
रामस्य जामदग्न्यस्य हस्तादीषत्कृतस्मितः ।
($4^{cd}$) शरं च हस्तादादाय ततो लघुपराक्रमः ।
($4^{ef}$) संधाय सशरं चापं विचकर्ष महायशाः ।
विकृष्य बलवच्चापि तद्धनुः सशरं तदा ।
($5^{ab}$) रामो दाशरथिर्वाक्यमिदं राममुवाच ह ।
(6) ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।
शक्तोऽपि ते न मोक्ष्येऽहमिमं प्राणहरं शरम् ।
(7) इमां तु ते गतिं दिव्यां निहन्मि तपसार्जिताम् ।
लोकानप्रतिमान्पुण्यान्निहन्मि शरतेजसा ।
(8) न ह्ययं वैष्णवो राम शक्यो दिव्यो महाशरः ।
मया मोघं समुत्स्रष्टुं बलदर्पविनाशनः ।
(9) ततो वरायुधधरं रामं दशरथात्मजम् ।
द्रष्टुं ब्रह्मादयो देवाः समाजग्मुर्मनोजवाः ।
देवानुपरि ताँस्तत्र दृष्ट्वा दिव्येन चक्षुषा ।
बुद्ध्या च ध्यानयोगेन रामं नारायणांशजम् ।
रामाभिभूतवीर्यौजा जामदग्न्यस्ततोऽब्रवीत् ।
कृताञ्जलिरिदं वाक्यं रामं दशरथात्मजम् ।
(13) कश्यपाय यदा राम मया दत्ता वसुंधरा ।
विषये मे न वस्तव्यं त्वयेह मम शासनात् ।
(14) सोऽहं ततः प्रभृत्यस्यां न वसामि क्षितौ क्वचित् ।
मिथ्याप्रतिज्ञः काकुत्स्थ मा भूवमिति निश्चयः ।
($15^{ab}$) ततो नार्हसि मे हन्तुं गतिं दिव्यां मनोजवाम् ।
($16^{cd}$) लोकांस्तु जहि मे पुण्याञ्शरेणानेन राघव ।
(17) अक्षयं मधुहन्तारं जानामि त्वां सनातनम् ।
धनुषोऽस्य परामर्शादस्तु स्वस्ति प्रसीद मे ।
($18^{ab}$) एते सुरगणा राम पश्यन्ति त्वां समागताः ।
वरायुधधरं वीरं साक्षाद्विष्णुमिवापरम् ।
(19) न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ।
($21^{cd}$) इत्युक्तः स शरं रामो मुमोच रघुनन्दनः ।
लोकेषु जामदग्न्यस्य रामस्यामिततेजसः ।
ततः प्रभृति रामोऽभूदलोकः शरतेजसा ।
($22^{ab}$) मुक्ते तस्मिञ्शरे देवाः प्राशंसन्राघवं तदा ।
आकाशगा विमानेषु स्वेषु दिव्येष्ववस्थिताः ।
($22^{cd}$) आसन्वितिमिराः सर्वा दिशश्च विदिशस्तथा ।
(23) रामोऽपि जामदग्न्यस्तं रामं दशरथात्मजम् ।
प्रदक्षिणमुपावृत्य जगामाथ स्वमाश्रमम् ।

[ For l 1–2, B2 reads the lines of St. 1 (cf. v l. 1). —(l. 2) V1 °नकठ, V2 °नकथो, B1 °तमतः. B4 °तकथः; D11 °तरुप (sic), M4 °नोत्कठो (for यन्त्रितस्तस्य). V3 गर्मा (for पितुर्). V2 M4 जामदग्न्यमथाब्रवीत् (for the post half). —(l 3) V2 ब्रह्मन् (for कर्म) V1 om (submetric); V3 B1 3 तु, V4 यत् (for तत्) D13 कृत त्वया (by transp ) V2 त्वघोर यत्त्वया कृत (for the post. half) —(l. 4) V3 °सूयि, D13 °सूय (for ऽभ्यसूये). Ñ2 ते V4 तत्र, D11 न तत् (last two hypermetric) (for तत्) M4 नाभ्यसूये च ते तत्र कृते घोरे च कर्मणि. —V4 om l 5 —(l. 5) V1 3 B2 (m. also as in B1) °घ्न V2 M4 °न्यून, B1 °ख्यात (for -परिक्षीण). M4 यत्सादित —(l. 6) S1 Ñ2 V4 B2 4 D1 10 M4 न (for मा). B1 च (for [अ]ति-) S1 नान्वितो भवेत् (for गर्वितो भव). —(l. 7) B1 [इ]द (for [ए]तद्) —M4 om. (hapl.) from the post half of l. 7 up to the prior half of l. 9. V1 पश्याम (for पश्य मे) V1 2 B2 D1 2 9 बलवीर(D2 °ज) स. —V4 om l. 8–10 —(l. 8) B2 D11 महातेज. B4 मे (for [अ]द्य). —(l 9) V1 om. (submetric), B4 तद् (for तद्). M4 पाणिना (for वीर्यवान्) D11 गृहीत्वा राघवस्तदा (for the post. half). —(l. 10) Ñ2 कृतस्य च, V1 कृतस्मय; V2 कृत मया (sic), M4 सयत्निव (for कृतस्मितः). —(l. 11) B4 बाण (for शर). M4 प्रगृह्य सशर चाप (for the prior half). —(l 12) M4 कृत्वा (for चाप). Ñ2 B3 D10.13 प्र(B3 प्रा)चकर्ष —(l 13) Ñ2 B3 D10 13 प्रकृष्य. V1 व damaged in बलवच्. D11 स विकर्षणन्महच्चाप (sic) (for the prior half). D11 वचन (for तद्धनु ) D13 शरण (for सशर). B2 तथा. —(l. 14) D11 दाशरथी रामम्. V1 D11 तीक्ष्णम् (for रामम्). V3 B2.4 M4 तं (for ह). B1 उवाच प्रथित पुन (for the post. half) —(l. 15) V4 [ऽ]सि (for मे). M4 मे पूज्यो (by transp.). —(l. 16) M4 त्वमतस् (for शक्तोऽपि). B1 om. (submetric) (for ते). Ñ2 V3 4 B1 3 4 मोक्षेहम्, B2 D13 मुचेयम्. V1 शक्तोपि न मोक्षे चाहम् (for the prior half). B3 इद (for इम). D11 इषु (for शरम्) —(l.17) B2 ते तु (by transp.). V1 B3 °त, V4 (erroneously) शरतेजसा (for तपसार्जिताम्). D11 इमास्तवकृते राम तपोबलसमार्जितं. —For ins. see below. —V3 reads l. 18 within brackets. —(l. 18) Ñ2 लोकात्मा°; B D10 लोकान्वा° (B1 om. वा) (for लोकानप्रतिमान्). V2 हन्मि (for पुण्यान्). V3 D11 लोकान्वर्षा(D11 °न्प्रतिमा)न्पुण्यान् (both submetric); M4 आहोस्वु(sic) लोकान्पुण्यास्ते (for the prior half). V1 3 B1.2.4 हन्मि ते, V2 शंसते, M4 हन्म्यद्य (for निहन्मि). —B4 om. l. 19. —(l 19) V2 मया शक्यो (for शक्यो दिव्यो). —(l. 20) Ñ2 D11.13 मया मोघ, V1 मया घोर; V2 महाघोरः. D11 बल*र्प-. D10 -विनाशन. —(l. 21) V2 वराबर- (for वरायुध-). —(l. 22) M4 तत्राजग्मुर्. V3 °हराः (for मनोजवाः). —After l. 22, B4 ins. the lines of $10^{c}$–$12^{b}$ with v.l. as in D1 (except °भूतास्) for 11 and सद्योनिहत° for the prior half of the line of $12^{ab}$. —(l 23)

# ७६

G. I. 78. I
B. I. 77 I
L. I. 72. I

गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः ।
वरुणायाप्रमेयाय ददौ हस्ते ससायकम् ॥ १
अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ।
पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २
जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ।
अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥ ३

D11 उपागतास् (for उपरि ताम्). —(l. 24) B D11 13 बुद्ध्वा (for बुद्ध्या). V1 B1 4 °गज, D11 विश्वात्मक तथा (for नारायणांशजम्). D13 सम नारायणेन तान् (for the post. half). —(l. 25) V3 -वीर्यांय, B1 D11 -वीर्यांसौ (for -वीर्यांजा). V4 B4 जामदग्नि- (for जामदग्न्यस्). V2 [ऽ]ब्रवीदिदम्; V4 B4 -मुनो° (for ततोऽब्रवीत्). —After l. 25, B3 (*inf. lin.*) ins. the lines of 10$^{c}$–12$^{b}$ as in B4. —(l. 26) V2 ततो (for इदं). —(l. 27) Ñ2 V1 4 B1 काश्यपाय. D11 मया (for यत्र). D10 मम (for राम). D10 याया (sic), D11 पुरा (for मया). —(l. 28) D11 om. (submetric) (for मे). V1 4 B D10.13 त्वयेति (for त्वयेह). V1 [अ]धारम°; V3 [अ]धातु°; B1.2 [अ]थ समागतात् (B2 °भूशात्), B3 [अ]थ समन्वगात्; B4 D10 13 [अ]थ समन्वशात् (for मम शासनात्). V2 त्वयात्यर्थं समागतात्; D11 इत्येवं स शशास मां (for the post. half). —(l. 29) D13 तदा (for तत·). D11 पृथिवीवासमव्ययं (for the post. half). —(l. 30) V2 मा भूमम् (sic), D11 मा भूयाम् (for मा भूत्तम्). V1.4 B2.4 निश्चित; V2 निश्चयं; V3 निश्चित· (for निश्चय). M4 न स्यामिति परंतप (for the post. half). —(l. 31) V2 गतु (for हन्तु). D11 मनोरमां. —(l. 33) Ñ2 B4 अक्षय्यं. V1 जानासि. B4 त्वा (for त्वा). D13 जाने त्वां पुरुषोत्तमं (for the post. half). —(l. 34) B2 वा (for ऽस्य). B3 अस्ति स्वस्ति; D13 स्वस्ति तेस्तु (for अस्तु स्वस्ति). —(l. 35) D11 निरीक्षते (for पश्यन्ति त्वा). —(l. 36) V2 B3 D10 वरांबर- (for वरायुध-). —(l. 37) D11 इव (sic) (for मम). V3 व्रीड*; V4 मुव्री (sic) (for व्रीडा). V2–4 B1.4 अर्हसि (sic). —After l. 38, B4 ins. the lines of 20 as in Ś1, while D11 reads the lines of 20$^{ab}$ and 21 for l. 39–40. —(l. 39) M4 तं (for स). B2 चापान् (for रामो). V4 मुमोचच (ditto). —D13 om. l. 41. —(l. 41) V2 [ऽ]स्माद् (for ऽभूत्). D10 °कुशा (sic); M4 (after corr. *sec. m.* as above) °स. (for शरतेजसा). —(l. 42) M4 मुक्ते तस्मि marg. *sec. m.* V4 चास्मिन्. V4 राघवस् (sic). V1 प्रशसन्नामबलं तदा (hypermetric), D13 प्रशशसुश्च राघवं; M4 राघवं प्रशशसिरे (for the post. half). —(l. 43) D11 ऋषिसंघा (for आकाशगा). M4 धिष्ण्येषु (for दिव्येषु). V1 ते दिव्येषु व्यवस्थिता. (for the post. half). —M4 om. l. 44. —(l. 44) Ñ2 D10 आसन्नतिमिरा:. V1 दिश· स, D13 दिशोथ (for दिशश्च). —After l. 44, B3.4 ins. the line of 22$^{cd}$ (v.l. ऋषि- for सर्षि- and then as in Ś1), while D11 ins. 1378* (cf. v.l. 22). —(l. 45) Ñ2 B3 D10.13 स; D11 च (for त). —(l. 46) D10 °गम्य; D13 °वृत्ति (sic) (for उपावृत्य). D11 प्रदक्षिणीकृत्य ततो (for the prior half) Ñ2 B3 D10.13 स्वमालय M4 जगामाकाशमास्थित (for the post. half).]

—After l. 17, B2 ins.

1380* न हि बाणं ब्राह्मणेऽहं न च मुञ्चामि सर्वथा ।

Colophon. D1–3.5.7 12 om (continue the Sarga). Ś1 reads in marg. —*Kāṇḍa name*: Ś1 Ñ2 D11 om. V B D10 आदि°. —After Kāṇḍa name, V3 4 B4 ins. बालचरिते. —*Sarga name*: Ñ2 V B2–4 D10.11 जामदग्न्यलोक (V4 °बल)वधः (B2 °रोधः); B1 जामदग्न्यलोकाभावः; D9 रामसंवादो. —*Sarga no.* (figures, words or both): V1.4 B1 4 om. Ś1 Dt D4 6 8.14 T G1.3 4 M1–3 76; Ñ2, B3 D10 77, V2 78, B2 D9 79, D11 58, G2 70, M4 74. D13 इत्यार्षे—यणे—कांडे—दग्न्य—वधो—सर्गः 76. —After colophon, T2 G1 2 4 M1 conclude with श्रीरामाय नमः; G3 श्रीमते रामानुजाय नमः; M2 श्री……नमः.

# 76

☞ Ñ1 missing Sarga 76 (cf. v.l. I. 66.10). D1–3.5 7.12 continue the previous Sarga.

1 $^{a}$) D1.2 9 12 G1 3 प्रसन्नात्मा; M4 जामदग्न्ये; Cm.t as in text (for प्रशान्तात्मा). Ñ2 V B D10.11 13 जामदग्न्ये गते रामे (V1.4 D11 तस्मिन्). —$^{b}$) V1 D11 जयं (for धनुः). B1 रामो दशरथात्मजः. —$^{cd}$) Ś1 Dt D1–9 12 M2.3 (*sup. lin. sec. m.* also) महायशाः (for ससायकम्). T2.3 ददौ हस्तेन सायकं; G1 3 ददौ परमभास्वरं (for $^{d}$). Ñ2 V B D10.11.13 M4 लब्ध्वा (V2 नवधा [hypermetric], D11 दृष्ट्वा; M4 om.) संदर्शयामास पितुः स्वबलनि(V1 2 B1 °मू)र्जितं.

2 $^{a}$) Dt गतो (for ततो) Ñ2 V B D10.13 M4 तांश्चा (D13 ततो)भिवादयांचक्रे (M4 °यामास), D11 लब्ध्वाभिवादयामासुर्. —$^{b}$) Ñ2 V B D10 -प्रभृतीन्; D11 -प्र*न् (for -प्रमुखान्). D10 **न्; M4 द्विजान् (for ऋषीन्). —$^{cd}$) Dt D8 Ct विकलं; Cm g as in text (for विह्वलं) ❀ Ck: विह्वलः परवशः। ❀ Ś1 D1–3.5.7 12 वाक्यमुवाच (for दृष्ट्वा प्रोवाच). Ñ2 V B D10 11 13 M4 प्रोवाच पितरं (V4 B1 वचनं) चेदं (D11 चापि) रामागमनविह्वलं (V4 °लं; D11 °ह्वलः).

3 $^{a}$) D13 ततो (for गतो). V4 जामदग्न्ये गते रामे. —$^{b}$) V2.4 D11 चतुरं(D11 °*)गिणीं (V2 °णीः) (all sic). —$^{c}$) Ś1 G2 -[अ]धिमुखी; D5 T2 °मुखे; T3 -विमुखी (for -[अ]भिमुखी). —$^{d}$) Ñ2 V B1 3 4 D10.13 M4 नाथिनी (for पालिता). —After 3, D14 T G4 ins.:

रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् ।
बाहुभ्यां संपरिष्वज्य मूर्ध्नि चाघ्राय राघवम् ॥ ४
गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।
चोदयामास तां सेनां जगामाशु ततः पुरीम् ॥ ५
पताकाध्वजिनीं रम्यां तूर्योद्घुष्टनिनादिताम् ।
सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ॥ ६
राजप्रवेशसुमुखैः पौरैर्मङ्गलवादिभिः ।
संपूर्णां प्राविशद्राजा जनौघैः समलंकृताम् ॥ ७
कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ।
वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ॥ ८ G. 1. 78. 8 B. 1 77 11 L. 1. 72. 8

1381* सदिशस्व महाराज सेनां त्वच्छासने स्थिताम् ।
शासनं काङ्क्षते सेना चातकालिर्जलं यथा ।

[ (l. 1) T2 *sup. lin. sec. m* महा in महाराज. —(l. 2) D14 तथा T2 चातका जलद यथा (for the post half). ]

4 $^a$) Ś1 D1–5 7 9 12 M2 3 तद्वचः; Ñ2 V B D10 11 M4 [ए]तद्वचः; D13 [अ]थ वचः; G2 M1 च वचः; Cg as in text (for वचनं). D11 श्रुः (for श्रुत्वा). —D2 om. (hapl.) $4^b$–$5^a$ —$^b$) D7 (after corr. as in text) प्राप्य (for राजा). Ñ2 V B हृ(V4 तु)ष्टः प्रमुदितो नृपः (= $5^b$), D11.13 प्रहृष्टमुदितो (D13 °वदनो) नृपः. —$^d$) B4 Dt D6.8 M3.4 मूर्ध्न्युपाघ्राय; D12 मूर्ध्नि व्याघ्राय; M2 मूर्धन्याघ्राय (for मूर्ध्नि चाघ्राय). —After 4, B3 ins. :

1382* सगद्गदमुवाचेदं चिरं जीव गुणाकर ।

5 D2 om. $5^a$ (cf v. l. 4). —$^a$) B3 ततो; M3 (after corr. *sec. m.* as in text) गते; Cg as in text (for गतो). G1 ज्ञात्वा (for श्रुत्वा). —$^b$) Cv m g हृष्टः (as in text). T3 हृष्टः स मुदितो; G1 3 प्रहृष्टो मुदितो; M3 भृशं प्र°; M4 प्रहृष्टमुदितो (for हृष्टः प्रमुदितो). Ś1 Ñ2 V B D1–3 5.7 9–13 प्राप्य हर्षमतु(V4 हर्षमु [submetric])त्तमं. —After $5^{ab}$, Dt D4.6 8 14 S (except M4) ins. :

1383* पुनर्जातं तदा मेने पुत्रमात्मानमेव च ।

[ T3 हित; M2 जातांम् (for जात) G2 M1.2 सुतान् (for पुत्रम्) ]

—$^c$) Ś1 D1–3 5 7.9 10.12 नोदयामास. D1–3 7 9 सेनां तां (by transp.). —$^d$) D1.2.9 जगाम च ततः; D3 ज॰मा°; D10 जगाम ससुतः (for जगामाशु ततः).

6 $^a$) D1 मूर्धजां ध्व * नीं; D12 G2 पताकाध्वजनीं (for पताकाध्वजिनीं). T3 पताकद्वंजनिं धंम्यां (sic). —$^b$) D2.5 12 तूर्योत्कृष्ट-; D9 तूर्योत्कर्ष-. D1 भवोत्कृष्टां निशाम्य तां; D3.7 घु (D7 पु) ष्टोत्कृष्टवराजितां. —For $5^c$–$6^b$, Ñ2 V B D11.13 M4 (l. 1 only for $5^{cd}$) subst ; while D10 subst. l. 2 only for $6^{ab}$:

1384* योजयित्वा पुनः सैन्यं जगाम स्वपुरीं प्रति ।
समुच्छ्रितध्वजवतीं तूर्यस्वननिनादिताम् ।

[ (l. 1) B1 सेनां (for सैन्य). V1 स पुरीं; V4 B4 स्वपुर. —(l. 2) V1.4 M4 -विनादितां. ]

—$^c$) D11 सिक्तराजपथीं (sic), D12 M3 (after corr. *inf. lin. sec. m.* as in text) सिक्तराजपथा. Ś1 D2.3.5.7.9.12 M4 कृत्स्नां (for रम्यां). D1 श्वेतध्वजामिमां कृत्स्नां. —$^d$) B4 °कुसुमोत्तमां.

7 $^a$) Ś1 Ñ2 V2–4 B D1–3.5 7 9–13 प्रवेशनसुमुखै (V4 °खीं), V1 °प्रदेशाभिमुख्यैः; D4 प्रवेशसुमुख्यैः. —$^b$) B4 Dt D3 6–8 मंगलपाणि (D3 7 °वासि)भिः; D11 मांगल्यवादिभिः; Cg as in text. —$^c$) Ś1 V2 3 B2 D1.2 5 10 13 प्रकीर्णां; Ñ2 B3.4 संकीर्णां; V1 4 B1 D12 आकीर्णां, D11 जार्कीणां (sic) (for संपूर्णां). D3 7 प्रकीर्णामाविशद्. —Ś1 reads from $7^d$ up to 1386* in marg. —$^d$) Ñ2 V B D1 2.10–13 पुरीं (D12 °रं) स्वं च निवेशनं; D3 7 पुरीं च स्व(D3 स्वं च) निकेतनं; D5 पुरं चक्रे निवेशनं. —For 7, M1 subst.

1385* तां प्रविश्य स राजर्षिः स्तूयमानः समन्ततः ।
पौरैः सभाज्यमानश्च प्रविवेश स्वमालयम् ।

Thereafter cont 1388*.

—After 7, Ś1 (marg.) Dt D4.6 8 9.14 S (except M4) Ck.t ins.; Cg comm on l. 4 only :

1386* पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ।
पुत्रैरनुगतः श्रीमाञ्श्रीमद्भिश्च महायशाः ।
प्रविवेश गृहं राजा हिमवत्सदृशं प्रियम् ।
ननन्द सजनो राजा गृहे कामैः सुपूजितः ।।

[ (l. 1) G1 3 -नैर् (G3 °तो) दूराद् (for -गतो दूर). —(l. 2) G2 M1 श्रीं° (for श्रीमान्). Ś1 * * यशाः (for महायशाः). —For ins. see below. —(l. 3) M3 पुरा (sic) (for गृहं). D14 T G4 पुनः (for प्रियम्). —(l. 4) Ś1 Dt D6 8 स्वजनैः; D4 (after corr. *sec. m*, before corr. as above) 14 स्वजनो; D9 सुतो; T2 सहृष्टो (for सजनो). T3 ननन्दनजनो राजा (sic) (for the prior half). ]

—After l. 2, G2 M1 ins. :

1387* राजमार्गं श्रिया दीप्तं दीपयन्दिव्यसंनिभम् ।
उन्मुखै राजमार्गस्थै राजदर्शनलालसैः ।
रामदर्शनदानेन राजा संभावयन्स्स तान् ।

—After 7, B2 3 ins., whereas M4 cont. after 1385* :

1388* महेन्द्रभवनप्रख्यं नानारत्नधनर्द्धिमत् ।

[ B2 सुरेन्द्र- (for महेन्द्र-). B3 -महर्द्धिमत्, M4 -समृद्धिमत्. ]

8 $^b$) B2 4 केकयी; Dt D6.8 कैकयी, D2 कैकेयी. —$^c$) V3 B3 वधूः; D1 वध्वाः; D2.9 वध्वः (for वधू-). V3 प्रतिजगृहे युक्ता (hypermetric), B2 D11 M4 -प्रति (D11 °ः) ग्रहं चक्रुर् (M4 °रु) (for -प्रतिग्रहे युक्ता). —$^d$) G4 याश्चान्ये

G. I. 78. 9
B. I. 77. 11
L. I. 72. 9

ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ।
कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः ॥ ९
मङ्गलालापनैश्चैव शोभिताः क्षौमवाससः ।
देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् ॥ १०
अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ।
रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः ॥ ११
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ।
शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ॥ १२
तेषामतियशा लोके रामः सत्यपराक्रमः ।
स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥ १३
रामस्तु सीतया सार्धं विजहार बहूनृतून् ।
मनस्वी तद्गतस्तस्या नित्यं हृदि समर्पितः ॥ १४
प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो व्यवर्धत ॥ १५

(sic), M4 तथान्या. T1 damaged for षि in योषितः. —After 8, T2 ins.:

1389* रामं च लक्ष्मणं चैव शत्रुघ्नं भरतं तथा ।
अर्चयन्मङ्गलाशीर्भिर्मङ्गलैरभ्यपूजयन् ।
उपहारैश्च संहृष्टाः कुमारानभिपूज्य च ।

9 [a]) V1 om. ततः. D2 श्रीतां (for सीतां) Ś1 Ñ2 V B D1–3.5.7.9–13 श्रीप्रतिमाम् (for महाभागाम्). M4 सीतां रामस्य पत्नीं ताम्. —[b]) D10.12 च य* स्विनीं; M4 लक्ष्मणस्य च (for च यशस्विनीम्). —[c]) Ñ2 V B D11 M4 [ए]व (for [उ]भे). —[d]) Dt D6.8 -योषितः (for -पत्नयः). Ñ2 V1–3 B D13 M4 परि (Ñ2 B3 D13 प्रति) गृह्य (V1.3 °ध्वज्या; M4 °वार्या) नुगृह्य च; V4 परिगृह्य समंततः. —After 9, Ñ2 V B D10.11.13 M4 ins.:

1390* ततः प्रवेशया (M4 °*) मासुर्नृपवेश्म स्वलंकृताः ।

10 [a]) Dt D6.8 होमैः (for चैव). Ś1 Ñ2 V B D1–3.5.7.10–13 M4 -ल (V1 D1.2.10–12 -लं) भनीयैश्च; D4 -रंभकैश्चैव; D9.14 T G2.4 M1 Cm.gp -लंभ (T3 G2 °ब) नै (G4 °न) श्चै (T1 damaged) व; G1.3 -लेपनैश्चैव; M2.3 -भरणैश्चैव; Cg.t as in text. —[b]) V2 D5 क्षोभिता (sic). D10 भौमवाससः; T1.2 क्षौमवाससा (for °वाससः). —[cd]) Ś1 D3 -[आ]यतन्या (D3 °न्य) नि (both sic). Ś1 D1–3.5.7.9.10.12 [आ]दौ (for [आ]शु). D9 सर्वथा (for सर्वास्ताः). Ś1 D1–3.5.7.9.10.12 परिचक्रमुः (for प्रत्यपूजयन्). Ñ2 V B D11.13 M4 उप (B3 °पा) निन्युश्च ता एता (V4 °नां; M4 °स्तत्र) देवतायतनान्यपि (V2 D11 °नि च).

11 [a]) V B2.4 [अ]भिवाद्यांस्तांस्; B1 M2 [अ]भिवाद्यास्ताश्; D2 [अ]भिवाद्यं च; D6.10.12 [अ]भिवाद्या (D6 °द्यो [sic]; D12 ***) श्च. —[b]) Dt सर्वे (sic), D11 सर्वैः; D12 M1.4 सर्वे-; Cg.t as in text (for सर्वा). T1 damaged ज in राज. D11 -सु*स् (for -सुतास्) Ś1 D4.7.10–12.14 T3 तथा (for तदा). Ñ2 V B D13 तत्र पूज्यान् (V1 पूज्य; V2 दृष्ट्वा) गुरूंस्तथा. —After 11[ab], D14 T G4 ins.:

1391* स्वं स्वं गृहमथासाद्य कुबेरभवनोपमम् ।
गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान् ।

—[c]) T1 damaged for रेमि. Ś1 Ñ2 V B D1–3.5.7.9.11–13 तत्र; D10 तु (submetric), D14 T G4 M4 काले; Cg as in text (for सर्वा). —[d]) Dt D6.8 मुदिता (for सहिता). Ś1 Ñ2 V B D1–3.5.7.9–13 M4 भर्तृ (B4 D3.7 M4 भर्तुः; D11 श्वसु [sic], D12 भ्रातृ [sic]) प्रियहिते रताः. —After 11, D14 T G4 ins.

1392* कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ।

12 Cf. 1. 3–4 of 531*. Ñ2 V B M4 om. 12–13. —[a]) D13 कृतार्थाश्; Ctp कृताज्ञा (for °स्त्राश्). —[b]) D10 सदयाः; T2 सवधूः (for सधनाः). —[d]) D2.9 वर्तयंतो. —After 12, D14 T G2.4 M1 (G2 M1 after 12[ab]) ins.

1393* काले काले तु नीतिज्ञास्तोषयन्तो गुरून्गुणैः ।
[D14 T G4 गुरु (T1 गु*).]

☞ After St. 12 (D14 T G4 after 1393*) Ś1 (on a Śodhakapatra written on one side which is half in length of the original fol.) Dt D4.6.8.14 S (except M4) read St. 1–5 (D4.14 T1 [damaged from 4[c] up to 11[a]] 3 G M1–3 St. 1–4) and 11–14 of II. 1, Ś1 alone repeating in their proper place.

13 Cf. II. 1.10 Ñ2 V B M4 om. 13 (cf v.l. 12). —[a]) Ś1 (m. also) D4.10 अतिशयो; D2 अप्रतिमो; D5.12 अतियशो; T3 M2 (before corr.) 3 अतिशया (metathesis) (M3 °याल्), Ct as in text (for अतियशा). —[b]) D11 रामः कमललोचनः.

14 Cf. lines 5 and 6 of 531*. T1 damaged from 14 up to the end of the Sarga. —[a]) Ś1 Dt D6.8.12 च; Cg as in text (for तु). —G3 om. 14[cd]. —[c]) Cv.r.m.g तद्गतस् (as in text). Dt D6.8 Ct तद्गतमनास्; D14 G1 तद्गतस्तस्यां (G1 °स्य). Ś1 D1.2.5.7.9.10.12 मनश्च तद्गतं (D12 °द्वलं) तस्य (D7 °स्या); D3 मनश्च *तं तस्यां. —[d]) Dt D6.8 Ct तस्या (for नित्यं). Ś1 D1–3.5.7.9.10.12 समर्पितं.

15 Cf. lines 4 and 5 of 526*. T1 missing 15 (cf. v.l. 14). —[b]) Ś1 D1–3.5.7.9.10.12 प्रिय- (for पितृ-).—[cd])

तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ।
अन्तर्जातमपि व्यक्तमाख्याति हृदयं हृदा ॥ १६
तस्य भूयो विशेषेण मैथिली जनकात्मजा ।
देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥ १७

तया स राजर्षिसुतोऽभिरामया
समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभेऽतिकामया
विभुः श्रिया विष्णुरिवामरेश्वरः ॥ १८

G. I. 78. 16
B. I. 77. 29
L. I. 72. 16

इति श्रीरामायणे बालकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

॥ समाप्तं बालकाण्डम् ॥

---

T3 G1.4 M3 ( after corr. *inf. lin. sec. m.* as in text ) Cv -गुणाश्; Cm g t as in text ( for -गुणाच् ). Dt D6 8 [ ऽ ]भि( D6 वि )वर्धते; D4 G4 M3 Cm.g [ ऽ ]प्य( M3 Cm g [ ऽ ]भ्य )वर्धत; Cv as in text ( for व्यवर्धत ). ❀ Ck रामस्यास्यां प्रीतिरवर्धत ।; Ct भूयोऽधिकं रामस्य प्रीतिर्वर्धते स्म । ❀ Ś1 D1–3.5.7 9 10 12 गुणरूपा( D3 7 अनुरूप, D5 10 °प )गुणा ( D10 °णै )श्चापि पुनर्भूयो वि( Ś1 °भि )वर्धिता ( D10 हृदि स्थितः; D12 °र्धते ).

**16** Cf lines 6 and 7 of 526*. T1 missing 16 (cf v l. 14 ). —[a]) Ś1 तस्याः स; D1–3 5 7.9 12 तस्यापि(sic). —[b]) Ś1 D5 10.12 पुनर्भूयो हृदि स्थितः. —[c]) Ś1 D1–3 5 7 9 10 12 अनाख्यातम्; Dt D6.8 G1 Ct अंतर्गतम्; Cv.r g.k as in text ( for अन्तर्जातम् ). D3 अपि वक्तव्यम् ( hypermetric ); D5 G3 M3 अभिव्यक्तम्; Cv.r.k as in text ( for अपि व्यक्तम् ). —[d]) Ś1 D1.2 5 9 व्याख्याति; D3 आख्यातं; D12 व्याख्यातं. Ś1 ( before corr. as in text ) D1 3 5.7.10 12 हृदयं हृदि; D2.9 हृदयप्रियं ( D2 °यः ).

**17** Cf. l. 2–3 of 526*. T1 missing 17 ( cf. v l 14 ). —For 14–17, Ñ2 V B D11 13 ( 14[c]–17 ) M4 subst. .

1394*(17) तासां भूयो विशेषेण मैथिली जनकात्मजा ।
रमयामास भर्तारं विष्णुं श्रीरिव रूपिणी ।
(15) प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।
प्रियभावः स तु तया स्वगुणैरभिवर्धितः ।
(16) तथैव रामः सीताया प्राणेभ्योऽपि प्रियोऽभवत् ।
हृदयं ह्येव जानाति प्रीतियोगं परस्परम् ।
(14) सीतया तु तया रामः प्रियया सह संगतः ।
प्रियोऽधिकतरस्तस्या विजहारामरोपमः ।

[ ( l. 1 ) B1 नेषां, D11 सीता ( for तासां ). D11 वियोगेन ( for विशेषेण ). —( l 2 ) B4 वरयामास. ( l. 3 ) B4 प्रियसीता. D11 रावणस्य तयाभवत् ( sic ) ( for the post. half ). —( l. 4 ) B1 प्रियाभावः Ñ2 B3 सह तया, D11 सुरतया ( for स तु तया ). M4 प्रियाभावात्स सीतायाः ( for the prior half ). V3 स्वगुणैरपि वर्द्धतः ( for the post. half ). —V4 om ( hapl. ? ) l. 5–7. —( l. 5 ) B1 D11.13 भवेत् ( for ऽभवत् ), M4 प्राणे प्रियतरोभवत् ( for the post. half ) —( l. 6 ) B3 प्रतिभाव ( for प्रीतियोग ). D13 पुरातन ( for परस्परम् ). —( l. 7 ) M4 स्तरां ( for तु तया ). D11 प्रियाज्ञा ( sic ) ( for प्रियया ). V2 सगम ( for संगत ). —( l. 8 ) Ñ2 V1.4 प्रियो( Ñ2 °या )धिकतर. D13 [ अ ]मृतोपमः. ]

**18** Cf. l. 7–10 of 531*. T1 missing 18 ( cf. v.l. 14 ). —[a]) Ś1 ततः स; B1 तदा स, M3 ( after corr *inf. lin. sec. m.* as in text ) सयात ( metathesis ) ( for तया स ). Ś1 D1–3 5 7 10.12 राजर्षिवरो; D9 राज्ञः सुतया. Ś1 Dt D1–4 ( after corr. as in text ).6.8 Cv.r.t [ ऽ ]भिकामया; Ñ2 V B M4 [ ऽ ]नुरूपया; D13 सुरूपया; Cm g as in text ( for ऽभिरामया ). D11 तया स राजर्षिवरानुरूपया. —[b]) Ś1 Ñ2 V1–3 B3 4 D13 समीयिवान्, V4 समेधिवान्; D11 समे..न्. D5 उत्तर- ( for उत्तम- ). B1 समो पितुर्जनकराजकन्यया. —[c]) D10 om. from second शु up to 18[d]. Ś1 D1 5.12 M4 [ ऽ ]भिरामया, Ñ2 V B D11.13 स ( Ñ2 सु; V1 B3.4 D11 स्व )कांतया; Dt D6 8 मुदान्वितो; D2 Cr [ ऽ ]भिकामया; D3.7 [ ऽ ]तिरामया; Cv [ ऽ ]धिकामया; Cm.g as in text. —[d]) Ñ2 V1 B3 D13 युक्तः; V2–4 B1.2 4 युतः; D11 M4 वृतः ( for विभुः ). M2 श्रिया विभुर् ( by transp. ). Ñ2 V B D13 M4 [ अ ]पराजितः; D11 [ अ ]परो यथा ( for [ अ ]मरेश्वरः ). Ś1 D1–3.5 7.12 शशीव पूर्णो ( D3 पूजावं [ sic ] )दिवि दक्षकन्यया.

Colophon. T1 fol. missing (damaged). —*Kānda name*: D1-3 9.11 om. V B आदि° (B2 [before corr.] अयोध्या°). —After Kānda name, Ñ2 V1.4 B4 ins. बालचरितं (V1 B4 °ते). —*Sarga name*: Ś1 दशरथप्रवेशप्रमोदो; Ñ2 हरः (?) अयोध्याप्रवेशः; V1 D2.3.7.12 दशरथप्रमो (D12 °मे)दो; V2.3 B2 D11 अयोध्याप्रवेशः; B1.3.4 अयोध्यासंप्रवेश.. Dt D8 रामक्रीडाख्यान; D1.5.10 दशरथप्रमोदनो; D6 क्रीडाख्यानं; D9 परशुरामपराजयो. —*Sarga no.* (figures, words or both) V1.4 B1.4 D3.5.12 om. Ś1 Dt D4.6.8.14 T2.3 G M1-3 77, Ñ2 79, V2 B2.3 78, D1 52, D2 49, D7 54, D9 80; D10 M4 75, D11 59. D13 —कांडे—. —After colophon, Ś1 ins.:

श्रीरामाय नमः।
रामाभिभवनं रक्षा क्रतोः शिलाविमोचनम्।
सीतास्वीकरणं रामगर्वभङ्गः पुरे स्थितः।
रामस्य परमा लीला बालकाण्डे प्रकीर्तिता।
वाल्मीकिऋषिणा रम्या परमानन्ददायिनी।
आदिकाण्डे ह्ययं प्रोक्तः श्रवणात्पापनाशनः। [5]
रामायणे वेदसमे कार्येषु श्रावयेद्बुधः।
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात्।
पठन्त्येकमपि श्लोकं समासाद्य विमृश्यते।
वाचकाय प्रदातव्यं वस्त्रं धेनुं हिरण्यकम्।
वाचके परितुष्टे तु तुष्टाः स्युः सर्वदेवताः। [10]

—V1 ins.:

ल. सं. २४१ श्रावण वदि ६ नौरिग्रामे उपाध्यायश्रीहरदत्तश्रीहरदत्ताभ्यां चेति लिखिता......इति।

—Dt D8.14 ins.:

श्रीरामार्पणमस्तु।
गच्छता मातुलकुलं भरतेन तदानघः।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः।

D8 cont.:

वस्वभ्रस्वरभूशाके मासि भाद्रापदेऽलिखत्।
पक्षेऽसिते हरिनिधिः सप्तम्यां गुरुवासरे।
श्रीमते रामानुजाय नमः।

—D4 ins.:

संवत् १८२९ कार्तिकमासे शुक्लपक्ष चतुर्दसी १४।

—D6 ins.

अयं कटः कुठारस्ते कुरु राम यथोचितम्।
बाले बालेन कल्पेन कृत्वा संरक्षणं क्रतोः।
सीता अङ्के धृता येन स रामः पातु नः सदा।
श्रीमते रामानुजाय नमः। श्रीरामाय नमः।

—D7 ins.

शुभं भूयात्। लिखितं सुखदेवेन ब्राह्मणेन। संवत् १८६९ सीति मार्गसिर वदि ५ चन्द्रवासरे। शुभं भवतु स्वार्थं परार्थं च।

—D9 ins.

संवत् १९०५ वर्षे मार्गशिरमासे शुक्लपक्षे चतुर्थ्यां सौम्यवारान्वितायां शुक्लतीर्थस्थपाठकलक्ष्मीधरात्मज देवशंकर तस्यात्मजवलरामात्मजेन गौरीशंकरेण लिखितं। श्री। श्रीरामो जयतु। श्री गुमांदेव सत्य छे।

—D12 ins. शुभमस्तु। कल्याणमस्तु। गाणपतिप्रसादात्।

—T2 ins. श्रीरामचन्द्राय नमः। करकृतमपराधं क्षन्तुमर्हन्ति सन्तः। श्रीलक्ष्मीनृसिंहस्वामी सहायं।

—T3 M1 ins. श्रीरामचन्द्राय (T3 °चन्द्र) परब्रह्मणे नमः।

—G1 ins. श्रीरामाय परमगुरवे नमः। हरिः ओं शुभमस्तु।

—G2.4 M2 ins. श्रीरामाय नमः (G2 adds हरिः ओं after it)।

—G3 ins. श्रीमते रामानुजाय नमः। हरिः ओं। सीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्राय नमः। and then along with Ck ins.:

बालकाण्डे तु सर्गाणां कथिता सप्तसप्ततिः।
श्लोकानां द्वे सहस्रे च साशीतिशतकद्वयम्।

—M3 ins. श्रीरामलक्ष्मणसीताभ्यां नमः। बालकाण्डः समाप्तः। शुभमस्तु हरिः। श्रीगणपतये नमः। अविघ्नमस्तु। श्रीगुरुभ्यो नमः। शुभमस्तु। पितर्पिकोह्ले शरणं। श्रीमहागणपतये नमः। श्रीसरस्वत्यै नमः। श्रीगुरवे नमः।

This Appendix comprises 9 additional passages found in some of the 37 MSS. which have been cited in the foot-notes to the constituted text. They are either too big or unimportant to be included in the foot-notes below the text.

The order of the MSS. and the principles adopted in writing the foot-notes to these passages are the same as to the constituted text.

## 1

Before Sarga 3, Ś1 Ñ V B D5 7.(after 1.3 $12^{ab}$) 10–13 ins :

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं चित्रं विचित्रपदमर्थवत् ।
पवित्रं वैष्णवं दिव्यमिदमाख्यानमुत्तमम् ।
वेदैश्चतुर्भिः समितमितिहासं पुरातनम् ।
श्रावयामास वै विप्रान्सुव्रतान्नियतेन्द्रियान् ।
धौम्यमाण्डव्यकुशिकान्सार्ष्टिषेणान्सकोहलान् ।
तौ चैवेक्ष्वाकुदायादौ मुनिवेषौ कुशीलवौ ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
कृता च तत्त्वतः कीर्ती राघवस्य महात्मनः ।
इहैवार्थश्च धर्मश्च निखिलेनोपलभ्यते ।
दण्डनीतिश्च विपुला त्रयी वार्ता च कृत्स्नशः ।
य इदं शृणुयान्नित्यं यश्चैन परिकीर्तयेत् ।
इह भोगान्वरान्प्राप्य देवैर्गच्छन्ति तुल्यताम् ।
इक्ष्वाकूणामिदं चैव जनकस्य च धीमतः ।
पुलस्त्यस्य च देवर्षेः कीर्तनं समुदाहृतम् ।
अश्वमेधावसाने च राघवस्य महात्मनः ।
कथितं तुष्टिजननमिदमाख्यानमादितः ।
यत्र धर्मार्थसंयुक्तं पापानां पावनं शुभम् ।
आदिकाण्डमिदं प्रोक्तं विस्तरश्चास्य कथ्यते ।
प्रथमं नारदप्रश्नो नदीगमनमेव च ।
ब्रह्मणो दर्शनं चैव वरप्राप्तिश्च पुष्कला ।
श्लोकानां परिमाणं च यत्रैतत्परिकीर्त्यते ।
अयोध्यावर्णनं चैव राज्ञो दशरथस्य च ।
अमात्यवर्णनं चैव कौशल्यायाश्च वर्णनम् ।
पुत्रार्थं च नरेन्द्रस्य मन्त्रणं समुदाहृतम् ।

**1**

D7 om. up to line 99. Ñ1 damaged up to l. 69. D13 begins with ref. श्री-त-वा-. —(l. 1) V2 रामस्य प्राप्तराज्यस्य (by transp.) (for the prior half). D12 वाल्मीक- (for वाल्मीकिर्). B1 भग*नृषि ; B3 (m also) मुनिसत्तम (for भगवानृषि ). V1 *-*-: वाल्मीकिर्मुनि· (for the post. half). —(l. 2) B4 रचित (for चरित). V4 कृत्स्न; B1 om., B3 (m. also) दिव्य (for चित्र). Ñ2 विचित्रं पदम्; B1 *चित्र°; (for विचित्रपदम्). V2 आप्तवान् (for अर्थवत्). —(l. 3) B2 विचित्र (for पवित्रं). D11 वैष्णव (for वैष्णव). —(l. 4) B1 देवैश् (for वेदैश्). V1.4 संमितम्; B3 (m. also) सयुक्तम्; D10 सहितम् (for समितम्). V3 चतुर्भिः समित वेदैर् (for the prior half) —(l. 5) V3 सुप्रीतान् (for सुव्रतान्). —(l. 6) D13 कुशिका- (for कुशिकान्). Ñ2 स्यष्टिसेनान्, V1 4 om , V2 D12 साष्णिषे (D12 °ष्टिष)णान्, B1 सार्ष्टिषेण-; B3 सार्ष्ठसेनान् (for सार्ष्टिषेणान्). Ñ2 B1 3 4 D12 13 सकोशलान्; V3 * कौतुकान् (for सकोहलान्). —(l. 7) V1 तौ चै:क्ष्वाकु°, D13 तौ तु वे° (for the prior half). B1 D5 मुनिबालौ (D5 °वेशो) (for मुनिवेषौ). —(l. 8) B3 (m. also) पुण्य; D13 पर (for स्वर्ग्यं). —(l. 9) V2–4 B1 2 कृ (B2 m. श्रु) त्वा; D13 कृतं (for कृता). B1 तु (for च). D10 तद्वतः, D13 तन्वता (for तत्त्वत·). —(l. 10) Ñ2 [आ]त्मश् (sic) (for [अ]र्थश्). V2.3 कामश्च; D11 निखिलो (for धर्मश्च). V1 निश्चयेन; V2.3 D11 धर्मश्चैव (for निखिलेन). Ñ2 B2–4 D10 13 °पद्यते; V3 [अ]नुकीर्तित ; V4 [उ]प*क्ष्यते (for [उ]पलभ्यते). B1.3 (m. also) कामश्च परिकीर्तितः; B2 (m. also) निखिल समपद्यते (for the post. half). —(l. 11) D10 विरला (for विपुला). —(l. 12) Ś1 V3 D11–13 चेद, V1 चापि (for चैनं). Ś1 °कीर्तित, V4 पठते नर· (for परिकीर्तयेत्). —(l. 13) D11 (before corr.) योगान्; D12 भोग- (for भोगान्). V1 भोगानुरागान् (hypermetric) (for भोगान्वरान्). V2 भोगानिहातुलान्प्राप्य, V3 इह प्राप्यातुलान्भोगान् (for the prior half). —(l. 14) D11 रम्य (for चैव). —(l. 15) B3 (m. also) पौल°, D12 °स्तस्य (for पुलस्त्यस्य). V1 °दाहृत·, V2 °दीकृतं (for समुदाहृतम्). —(l. 17) D13 पुष्टि- (for तुष्टि-). B3 (m. also) D11 उत्तम (for आदित·). —(l 18) V1.2 D5.12 यच्च; D11 सर्वं-; D13 अत्र (for यत्र). B1 -सहितं (for -संयुक्त). D13 नाशन (for पावन). Ñ2 B3(m. as above).4 D10 महत् (for शुभम्). D11 पावनानां च पावन (for the post. half). —(l. 19) Ś1 V1 D5 11 इह (for इद) V4 विस्तर; B1 विस्तारश्; D13 विस्तराच् (for विस्तरश्). V2 [अ]त्र; B1 [अ]नु· (for [अ]स्य). —(l. 20) D11 वाल्मीकिर् (for प्रथम). —(l. 21) D11 damaged for ब्रह्मणो. Ś1 तु (for च). D13 वरप्राप्तिश्च वर्णन (for the post. half). —D13 om. (hapl.) l. 22–24. —(l. 22) V1 प्रतिभार्थं च काव्यस्य (for the prior half). V2.3 यच्च (for यत्र). Ñ2 °कीर्तितं; B3 (m. as above) °कीर्तनं; D10 °कीर्तिते (for परिकीर्त्यते). —V3 om. (hapl.) from राज्ञो in l. 23 up to चैव in l. 24. —(l. 24) D12 -दर्शनं (for -वर्णनं). Ś1 दर्शनं (for वर्णनम्). V4 कौशल्यायाम्यवर्णनं (sic) (for the post.

अश्वमेधक्रिया चैव वरप्राप्तिश्च पुष्कला ।
भागार्थिनां च देवानामागमः समुदाहृतः ।
रावणस्य वधोपायं मन्त्रणं समुदाहृतम् ।
अंशावतरणं चात्र सुराणां समुदाहृतम् ।
दिव्या च पायसोत्पत्तिः पुत्रजन्म नृपस्य च ।
कौशल्यायां च रामस्य कैकेय्यां भरतस्य च ।
यमयोश्च सुमित्रायां सभव· समुदाहृतः ।
वानराणां च सर्वेषामुत्पत्तिः परिकीर्तिता ।
राज्ञो दशरथस्येह विश्वामित्रेण संगमः ।
प्रदानं चैव रामस्य रक्षणार्थं महाक्रतोः ।
लक्ष्मणानुगमश्चैव विद्याप्राप्तिश्च पुष्कला ।
अनङ्गाश्रमवासश्च ताडकावनदर्शनम् ।
ताडकायाश्च निधनमस्त्रलाभश्च कीर्त्यते ।
सिद्धाश्रमनिवासश्च सत्ररक्षणमेव च ।
सुबाहोर्निधनं चात्र मारीचस्य च भर्त्सनम् ।
विश्वामित्रस्य चैवर्षेः स्ववंशपरिकीर्तनम् ।
गङ्गायाः प्रभवश्चैव पवित्रः परिकीर्तितः ।
दिव्यगर्भविपतन कार्तिकेयस्य संभवः ।
विशालस्य च राजर्षेर्वंशस्य परिकीर्तनम् ।
अहल्याशापमोक्षश्च मिथिलायाश्च दर्शनम् ।
दर्शनं यज्ञवाटस्य मैथिलस्य च दर्शनम् ।
चरितं चैव कार्त्स्न्येन कौशिकस्य महात्मनः ।
कथितं चात्र रामस्य शतानन्देन धीमता ।
धनुषो भेदनं चैव कन्यायाश्च निवेदनम् ।
राज्ञो दशरथस्येह जनकस्य च संगमः ।
सीतादीनां च कन्यानां विवाहः समुदाहृतः ।
वधूर्गृहीत्वा नृपतेर्यानं दशरथस्य च ।
समागमश्च रामस्य जामदग्न्येन धीमता ।
जामदग्न्यस्य लोकानां वधश्चात्रानुकीर्तितः ।
अयोध्यासंप्रवेशश्च प्रवासो भरतस्य च ।
अयोध्यावासिनां चैव प्रमोदः परिकीर्तितः ।
इत्येतत्प्रथमं काण्डमादिकाण्डमिहोच्यते ।
सर्गाश्चैव चतुष्षष्टिः श्लोकानां चैव कीर्त्यते ।
द्वे सहस्रे शतान्यष्टौ श्लोकाः पञ्चाशदेव तु ।
बालचर्या हि यत्रोक्ता राघवस्य महात्मनः ।

$V_2$ reads colophon

half). —(l. 25) $V_4$ युद्धार्थं च, $B_2$(m. as above).$_4$ $D_5$ पुत्रार्थस्य; $D_{12}$ पुत्रार्थश्च (for पुत्रार्थं च). $V_{3\ 4}$ यन्त्रण; $D_{13}$ सत्रेण (for मन्त्रण). $B_3$ (m. also) °दाहृतः (for समुदाहृतम्). —After l. 25, $B_3$ ins :

गमन ऋष्यशृङ्गस्य तत्रैव परिकीर्तितम् ।

—(l. 26) $V_3$ -क्रियां (for -क्रिया). Ś$_1$ तु (for च). $D_{11}$ राज्ञो दशरथस्य च (= post. half of l. 23) (for the post. half). —After l. 26, $B_4$ reads l. 37–41. —(l. 27) $V_4$ °त्मनां (for भागार्थिनां). $D_{11}$ lacuna for the prior half. Ñ$_2$ $B_{2-4}$ $D_{10.13}$ परिकीर्तित ; $V_{2.3}$ °हृतं (for समुदाहृत·). —(l. 28) Ñ$_2$ $B_{1\ 2.4}$ $D_{11.12}$ °पाय-; $V_2$ $B_3$ $D_{13}$ °पाये; $V_4$ °पायो (for वधोपायं). $V_3$ अंशावतरण तथा; $D_{13}$ मन्त्रश्च समुदाहृत· (for the post. half). —$D_{13}$ transp. lines 29 and 30. —(l. 29) Ñ$_2$ $D_{11}$ °तारण, $V_3$ रामादिवर्णन; $B_3$ (m also) स्वर्गाव° (for अशावतरण). Ñ$_2$ $V_{3.4}$ B $D_{10.13}$ चैव, $D_{11}$ चापि (for चात्र). $V_1$ सुराणां च (hypermetric), $D_5$ मन्त्रण (for सुराणा). —(l. 31) $B_1$ कौशल्यायाश् (for कौशल्यायां). $B_1$ $D_{11}$ कैकेय्या (for कैकेय्या) —(l. 32) $B_1$ सुमित्राया (for सुमित्रायां). $V_2$ °हृन (for समुदाहृत·). —(l. 33) Ñ$_2$ $V_3$ $B_3$ (m. as above) $D_{10}$ समुदाहृता (for परिकीर्तिता). —(l. 34) $D_{13}$ ततो (for राज्ञो). —(l. 35) $B_2$ प्रयाण (for प्रदान). —(l. 36) $V_2$ °गमन (hypermetric) (for [अ]नुगमश्). $V_3$ लक्ष्मणस्यानुगमन (for the prior half). —(l. 37) Ś$_1$ अनगश्च निवासश्च (for the prior half). Ś$_1$ $V_{1.4}$ $D_{5\ 13}$ नाट($V_{1.4}$ °ल)का- (for ताडका-). —(l. 38) Ś$_1$ $V_1$ $D_{5.13}$ ताट($V_1$ °ल) कायाश्. $D_{12}$ निधनश् (for निधनम्). Ñ$_2$ $V_{2.3}$ मत्र°, $V_4$ °लाभ, $D_{12}$ चास्त्र° (for अस्त्रलाभश्). $D_{10}$ कीर्तित· (for कीर्त्यते). —(l. 39) $V_2$ शस्त्र-; $B_1$ क्रतु- (for सत्र-). —(l 40) $V_{3\ 4}$ $B_4$ चैव (for चात्र). $B_3$ (m. also) मरणं चैव (for निधन चात्र). $B_1$ दर्शनं; $D_5$ भर्त्सनात् (for भर्त्सनम्). —(l. 41) Ś$_1$ $V_3$ $D_{10\ 13}$ देवर्षे·; $V_1$ $B_{1.3}$ (m. also) राजर्षे· (for चैवर्षेः). —(l. 42) $V_1$ प्रसवश्, $D_{11}$ प्रभव; $D_{13}$ संभवश् (for प्रभवश्). $V_1$ पवित्र (for पवित्र). $V_1$ °कीर्तित; $V_2$ °कीर्त्यते (for परिकीर्तित·). —(l 43) $V_1$ दितिसर्वाव°; $V_{2\ 4}$ °व($V_4$ वि)तरण; $V_3$ दिव्यगर्भात्प्रपतनं (for the prior half). —(l. 44) Ś$_1$ $B_3$ (m. as above) देवर्षेर् (for राजर्षेर्). $D_{13}$ धर्मस्य (for वंशस्य). $V_1$ °कीर्तितं (for परिकीर्तनम्). —(l. 45) $D_{10}$ अहिल्या- (for अहल्या-). $B_3$ (after corr as above) -पाप- (for -शाप-). $V_1$ -विमोक्षश् (hypermetric) (for -मोक्षश्). —(l. 46) $V_1$ जनकस्य (for मैथिलस्य). —$D_{11}$ om (hapl.) l. 47–49. —(l. 48) $B_3$ (m. also) चरित (for कथित). $V_{2\ 4}$ $B_3$ (m. also) राघवस्यात्र, $V_3$ चात्र रामाय (for चात्र रामस्य). $B_1$ सतानद्रेन. —After l. 48, $D_5$ reads l 54 repeating it in its proper place —(l. 50) $V_{3.4}$ जनकेन (for जनकस्य). Ś$_1$ च सभव·; $V_3$ समागम· (for च सगम·). —(l. 51) $D_{12}$ सीतादानं (for सीतादीनां). Ś$_1$ समुदीरित·. —(l. 53) $V_{3.4}$ समागम (for समागमश्). $B_3$ (before corr. as above) जमदग्न्येन. —(l. 54) $V_2$ वधतोत्र, $B_{3\ 4}$ रोधश्चात्र (for वधश्चात्र). $V_4$ [अ]नुकीर्तन; $B_1$ [अ]नुकथ्यते. —(l. 55) $V_4$ अयोध्यायां प्र° (for the prior half). $V_4$ प्रसादो (sic) (for प्रवासो). —(l. 56) $B_1$ प्रसाद·; $B_3$ (before corr as above) प्रमद (for प्रमोद·). Ñ$_2$ $V_{3\ 4}$ B $D_{10\ 13}$ परिकीर्त्यते. —(l. 58) $D_{11}$ सर्गाणां च. $V_4$ $B_{1.2}$ $D_{10}$ चात्र (for चैव). $V_{2\ 4}$ $B_{1.4}$ कथ्यते (for कीर्त्यते). $B_3$ $D_5$ च प्र ($B_3$ [m. also] चात्र; $D_5$ परि) कीर्त्यते (for चैव कीर्त्यते). —(l. 59) Ś$_1$ $D_{5.10.12}$ पचदशैव (for पञ्चाशदेव). $V_3$ $B_2$ च (for तु). —After l. 59, $V_3$ ins. :

अथ द्वितीय वक्ष्यामि अयोध्याकाण्डमुत्तमम् ।

—(l. 60) $V_1$ बालकार्या हि; $V_4$ $D_{13}$ बालचर्या च, $B_3$ बालचर्यादि. $V_4$ या प्रोक्ता; $B_3$ यत्रोक्तं (for यत्रोक्ता). $B_3$ (m. also) रामस्य

अतः परं द्वितीयं तदयोध्याकाण्डसंज्ञितम् ।
यत्राभिषेकसंकल्पो व्याघातश्चैव कीर्त्यते ।
कैकेय्यनुनयश्चैव शोको दशरथस्य च ।
वनप्रयाणं रामस्य लक्ष्मणानुगतिस्तथा ।
विषादः प्रकृतीनां च तथैव च विसर्जनम् ।
निषादाधिपसंवादो सूतस्य च विसर्जनम् ।
गङ्गायाश्चाभिसंतारो भरद्वाजस्य दर्शनम् ।
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ।
वास्तुकर्मनिवेशश्च चित्रकूटे महागिरौ ।
उपावृत्ते सुमन्त्रे च राज्ञो मोहागमः परः ।
स्वशापकथनं चैव स्वर्गप्राप्तिर्नृपस्य च ।
भरतागमनं तूर्णं तथा राजगृहादपि ।
रामप्रसादनार्थं च भरतस्य महात्मनः ।
गमनं कीर्त्यते वासो भरद्वाजस्य चाश्रमे ।
दर्शनं चैव रामस्य पितुश्च सलिलक्रिया ।
प्रसादनं च रामस्य बहुशः परिकीर्तितम् ।
जाबालेर्यत्र वाक्यानि वामदेवस्य चोभयोः ।
इक्ष्वाकूणां च वंशस्य कीर्तनं समुदाहृतम् ।
अप्रतिज्ञा च रामस्य गमने कोसलान्प्रति ।
पादुकाहरणं चैव भरतस्य विसर्जनम् ।
नन्दिग्रामप्रवेशश्च मातॄणा च विसर्जनम् ।
अयोध्यासंप्रवेशश्च शत्रुघ्नस्य महात्मनः ।
काण्डं द्वितीयमित्युक्तमयोध्याकाण्डसंज्ञितम् ।
अशीतिसंख्यया सर्गाः श्लोकानां चात्र कीर्त्यते ।
त्रीणि श्लोकसहस्राणि नव श्लोकशतानि च ।
श्लोकानां द्वे शते चैव भूयः श्लोकाश्च सप्तति. ।

V2 reads colophon

अतः काण्डं तृतीयं तु आरण्यकमिति स्मृतम् ।
यत्र रामो महाबाहुर्दण्डकं प्राविशद्वनम् ।
अनसूयासमस्या च अङ्गरागस्य चार्पणम् ।
विराधदर्शनं चैव वधश्च समुदाहृतः ।

---

च ( for राघवस्य ) —( l. 61 ) V2 B1 D13 तु ( with hiatus ) ( for तद् ) —( l 62 ) V2 अत्र, D5 यात्रा- ( for यत्र ). V3 -सपत्ति· ( for -संकल्पो ). Ś1 चैव कीर्तित·; B4 परि° ( for चैव कीर्त्यते ). —( l. 63 ) Ś1 °श्रुतयश्, V B3.4 D5.12 13 कैकेय्या°, D11 °य्यानुमतश् ( for कैकेय्यनुनयश् ). —( l. 64 ) Ñ2 V1–3 B D10.13 °गमस्; V4 °गतस् ( for लक्ष्मणानुगतिस् ). —( l. 65 ) D13 विषाद ( for विषाद· ) —After l. 65, B3 ins.

प्रजाना च परित्यागो गमन राघवस्य च ।

—B4 om ( hapl. ) l. 66. Ś1 om from सूतस्य up to सतारो in line 67. —( l. 67 ) V3 [ अ ]पि ( for [ अ ]भि- ). D5.12 repeat the prior half of l. 66 ( for the prior half ). —D11 13 om. ( hapl. ) l. 68. —( l. 68 ) Ś1 °स्य चैवाज्ञा, V1 °भ्यनुज्ञाच्च, B3 °घनुज्ञानाच्, D5 12 भा( D12 भ )रद्वाजस्य चानुज्ञा ( for the prior half ). —( l. 69 ) Ś1 V1 -निवेशं च, V3 -विशेषस्तु; D11.12 -निवासश्च ( for -निवेशश्च ). —After l. 69, B3 ins.

वासश्च राघवस्यापि सीताया लक्ष्मणस्य च ।

—( l. 70 ) B4 सुमद्रे, D12 सुमित्रे ( for सुमन्त्रे ). V1 D13 पुन· ( for पर ). —Ñ1 damaged from प्राप्ति up to l. 75. —( l. 71 ) V4 -पाप- ( for -शाप- ). V1 -कर्षणं ( for -कथन ). —( l. 72 ) V2.4 ( m. as above ) B1 4 चैव; D12 स्वर्ग ( for तूर्णं ). V2 B1.4 तूर्णं, V4 ( m. as above ) हतु ( for तथा ). —( l 73 ) V4 -प्रवास°, B4 -प्रसादनं चैव; D13 °नार्थे च ( for -प्रसादनार्थं च ). D5 भरतस्य च ( hypermetric ) ( for भरतस्य ). —( l. 74 ) D12 रामन ( sic ) ( for गमन ). D13 कीर्तने ( for कीर्त्यते ). V4 रामो, D13 चैव ( for वासो ). Ś1 V1 D5 भार° ( for भरद्वाजस्य ). —B4 om. ( hapl. ) from the post. half of l 75 up to the prior half of l. 76. D5 reads from the post. half of l. 75 up to the prior half of l. 78 in marg —Ś1 repeats l. 76 after l. 81. —( l. 76 ) Ñ1 चात्र की°, Ñ2 V1 °कीर्तित·; V4 °कीर्त्यते ( for परिकीर्तितम् ). —( l. 77 ) V1.4 B1 याबा°, D11 याबलेर्; D12 जावाल्ये ( hypermetric ) ( for जाबालेर् ). B3 काव्यानि ( for वाक्यानि ). V1–3 D5 राम° ( for वामदेवस्य ). —Ñ1 damaged l. 79–82. —( l. 79 ) V1 अथ प्रतिज्ञा; V3.4 B1.3 ( m. also ) प्रतिज्ञा चात्र, B4 स्व°, D13 प्रतिज्ञा चैव ( for अप्रतिज्ञा च ). Ś1 धर्मस्य ( for रामस्य ). V2 गमन ( for गमने ). V1 कौशल ( for कोसलान् ). D5 अपि ( for प्रति ). —( l. 80 ) V1 -चरण ( sic ), V2 D11 -ग्रहण ( for -हरण ). —( l. 81 ) V3 D13 °ग्रामे; B1 नद्रि° ( for नन्दिग्राम- ). —After l 81, Ś1 repeats l. 76. —( l. 82 ) D12 °श्च ( for शत्रुघ्नस्य ). D5 °मनः ( for महात्मन· ). —After l 83, B2 reads l. 118–120 repeating them in their proper place. —( l. 84 ) D5 -सख्येयाः ( for -सख्यया ). Ñ1 V4 कथ्यते ( for कीर्त्यते ). —( l. 85 ) V1 B2 त्रीणि ( for नव ). Ñ1 damaged from शतानि up to line 88. —( l. 86 ) D13 पुन ( for भूय· ). D12 तप्तति ( sic ) ( for सप्ततिः ). —( l. 87 ) V3 B1 D13 पर ( for काण्डं ). Ś1 द्वितीय ( for तृतीयं ). D5 च ( for तु ). D12 अत· पर कांड तृतीय ( hypermetric ) ( for the prior half ). —( l. 88 ) V3 दडकारण्यमाश्रितः ( for the post. half ). —( l. 89 ) Note hiatus between the two halves. B1.4 D5 अनु°; D12 °भूया- ( for अनसूया- ). Ś1 D5.13 [ अ ]प्यग°, D12 [ अ ]थाग° ( all to avoid hiatus ) ( for अङ्गरागस्य ). —( l. 90 ) V1 °हृतं; V3 परिकीर्तित ( for समुदाहृत· ). —( l. 91 ) B1 [ अ ]पि ( for [ ए ]व ). V3 B4 चैव संवादो ( for दर्शन चैव ). Ñ1 V1.2.4 B2 D13 [ ए ]व ( for [ अ ]पि ). V1 सा*न; V2 B4 दर्शनं ( for सान्त्वनम् ). —( l. 92 ) D12 -प्राति ( sic ) ( for -प्राप्तिर् ). Ñ1 damaged from the post. half up to line 95. —( l. 93 ) Ñ2 स्व°, V2 °धम- ( for सुतीक्ष्णाश्रम- ). Ś1 V4 D5.12 सुतीक्ष्णस्याश्रमप्राप्ति ( for the prior half ). —( l. 94 ) Ś1 D13 °कर्णो; V3 मादकार्णो; B1 मंद्र°; D12 °कर्णेश् ( for मन्दकर्णेश् ). V4 मदकर्णस्य. V2.3 कथन ( for कथित ). Ś1 V4 D5.12 °शत्रु-; Ñ2 B3 D10.13 शक्रस्य च ( for यत्र शक्र- ). —( l. 95 ) V2 D

ऋषीणां दर्शनं चैव मैथिल्याश्चापि सान्त्वनम् ।
शरभङ्गाश्रमप्राप्तिर्महेन्द्रस्य च दर्शनम् ।
सुतीक्ष्णाश्रमसंप्राप्तिः संवादः सह सीतया ।
मन्दकर्णेश्च कथितं यत्र शक्रविसर्जनम् ।
इल्वलस्य च संवादः कीर्तनं च दुरात्मनः ।
अगस्त्याश्रमवासश्च तथा संपरिकीर्तितः ।
दर्शनं पञ्चवट्याश्च जटायोश्चैव दर्शनम् ।
जनस्थाननिवासश्च शिशिरस्य च वर्णनम् ।
स्मरणं भरतस्याथ कैकेय्याश्चैव गर्हणम् ।
संवादः शूर्पणखया विरूपकरणं तथा ।
खरस्य च वधो घोरो दूषणत्रिशिरोवधः ।
लङ्काप्रवेशो राक्षस्याः शूर्पणख्याः प्रकीर्तितः ।
सीताया लोभनं चैव रावणस्यानुशब्दितम् ।
मारीचाश्रमसंप्राप्ती रावणस्य दुरात्मनः ।
मारीचश्च मृगो भूत्वा वैदेहीं समलोभयत् ।
लोभयित्वा च वैदेहीं राघवस्यापकर्षणम् ।
मारीचस्य वधश्चैव लक्ष्मणस्य च गर्हणम् ।
सीताया हरणं चैव सौमित्रेश्चात्र संगमः ।
जटायुषो वधश्चात्र सीतायाश्च प्रवेशनम् ।
लक्ष्मणस्य च संवादो राघवेण महात्मना ।
हृतां च जानकीं मत्वा विलापो राघवस्य च ।
जटायोर्दर्शनं चैव सत्कारश्च महात्मनः ।
गृध्रराजस्य रामेण कृता चैव जलक्रिया ।
कबन्धस्य वधः प्रोक्तः स्वर्गप्राप्तिश्च पुष्कला ।
कबन्धस्य च वाक्येन सुग्रीवान्वेषणं परम् ।
शबरीदर्शनं चैव पम्पायां परिदेवनम् ।
इति काण्डं तृतीयं तु आरण्यकमिति स्मृतम् ।
सर्गाणां तु शतं चैव सर्गाश्चैव चतुर्दश ।
चत्वारीह सहस्राणि श्लोकानां कीर्तितानि च ।
शतं चैवात्र विज्ञेयं श्लोकाः पञ्चाशदेव तु ।

---

इल्वणस्य, B2.3 इल्वलस्य. D5 सवाद. —D13 om. (hapl.) from the post half of l. 96 up to the prior half of l. 98. —(l. 97) V2 चापि (for चैव). —(l 98) V3 जल° (for जनस्थान-). V2 [अ]नासरस्य (sic) (for शिशिरस्य). D5 दर्शन (for वर्णनम्). —(l. 99) Ñ [अ]थै (for [अ]थ). Ñ1 damaged from the post. half up to l. 101. V4 B2 (m. as above) D11.12 [अ]पि, D5 [अ]थ (for [ए]व). V4 दर्शन (for गर्हणम्). ☞ D7 resumes —(l. 100) Ś1 V3 D5 11 12 शूर्पनखा(D11.12 °णख्या)श्च, V1 सूर्पणखाया; V3 शूर्पणखायाश्च (hypermetric) (for शूर्पणखया). V1 °करणम्, D12 रूपकरण (submetric) (for विरूपकरणं). —(l. 101) D13 खरदूषणयोश्चैव वधस्त्रिशिरसस्तथा. —After l. 101, B3 ins.:

चतुर्दशसहस्राणां राक्षसानां तथा वधः ।

—(l. 102) Ś1 °नख्याः, D11 सूर्पा° (for शूर्पणख्याः). Ñ2 च की°, V4 प्रकीर्त्यते, B4 विशेषतः (for प्रकीर्तित). —(l. 103) Ñ B3 D10 [अ]थ श°; V1 °शब्दितः; V4 °शसन, B1 [अ]त्र श°, B2 च श° (for [अ]नुशब्दितम्). —D7 om. (hapl.) l. 104. —(l. 104) V4 मारीचस्याश्रमप्राप्ती (for the prior half). —Ñ1 damaged l. 106–109. —(l. 106) D7 तु (for च). D5 रावणस्य (for राघवस्य). V4 B4 [अ]पि क°; D12 °मर्षणं (for [अ]पकर्षणम्). —(l. 107) D12 मारीचश्च. D10 लक्षणस्य (sic) (for लक्ष्मणस्य). Ś1 V1 D5 11 12 वि°; V3 *गर्हणं, V4 निबर्हण (for च गर्हणम्). B4 ** लक्ष्मणगर्हण (for the post. half). —(l. 108) V2.4 [अ]पि, V3 [अ]थ (for [अ]त्र). Ś1 D7.13 सत्का(D13 संक)रश्च महात्मनः (for the post. half) D11 सीताप्रहरणं चैव लक्ष्मणस्य च संगतः. —D13 om. (hapl.) l. 109–112. Ś1 D7 om l. 109–110. —(l 109) V3 B1 [ए]व (for [अ]त्र). D12 जटायुषो वधश्चामित् (sic) (for the prior half). V1 B2 (m. also) D5.11.12 प्रवे° (for प्रवेशनम्). —(l. 110) V2.4 °वस्य, D5 लक्ष्मणेन (sic) (for राघवेण). Ñ V2 B1 °वने; V4 °बले (for महात्मना). —(l. 111) Ñ1 B2 स्मृत्वा (for मत्वा). —Ñ1 damaged from महात्मन up to l 115. —(l. 112) V2.3 जटायुशोर् (hypermetric) (for जटायोर्). V3 B2 महात्मना (for महात्मन) —(l 113) Ñ2 V3 B (B3 m. as above) D13 खगराजस्य. —(l. 114) D10–12 कवन्धस्य (here and elsewhere below). V2 प्रोक्त, D5.12 प्राप्ति (for प्रोक्तः). Ś1 तु (for च). D11 पुष्कलं (for पुष्कला). —(l. 115) D12 om. च (submetric). Ñ2 B3 (m. as above) D10 तदा, V2 कृत, V3 B1 D12 स्मृतं, V4 B4 D13 तथा (for परम्). —(l 116) Ñ2 V1 2 4 D5.7 10–13 शवरी-. V3 पपाया (for पम्पाया). V1 D5.11 परिवेदन. D13 पंपायाश्चैव दर्शनं (for the post. half). —(l. 117) V3 तृतीयकाण्डं (for काण्ड तृतीयं). V2 च, V3 हि, D11 तद् (for तु). —After l. 117, B2 repeats l. 84–86 in marg. —B2 repeats l. 118–120 here reading them for the first time after l. 83. —(l. 118) Ñ V B D10 13 च (for तु). Ñ1 V2–4 B1 ज्ञेयं (for चैव). —Ñ1 damaged l. 119–122. —(l. 119) B1 3 (m also) °रि च (for चत्वारीह). Ñ2 °प्राणि (sic); D5 सः स्राणि (for सहस्राणि). Ś1 कथितानि वै; V2 कीर्तन मतं (for कीर्तितानि च). —(l. 120) V3 D7 विज्ञेया (for विज्ञेयं). B2 D7 पंचदशैव; D5 °शदैव, D11 °दशेव; D12 पचशतै च (sic) (for पञ्चाशदेव). V3 च (for तु). —V4 om. l. 121. —(l. 121) Ñ2 B (B3 m. as above) D10 13 पर (for काण्ड). Ś1 D11 °च, D13 प्रवक्ष्यामि (for चतुर्थं तु). V1 D5.7.12 कैष्किन्ध्यकम् (D5 °धकम्; D12 °धाकम्), V3 कि किंधकम् (for कैष्किन्धिकम्). V3 सज्ञक (hypermetric) (for स्मृतम्). Ñ2 B D10 11 13 किष्किंधाकांड (B1 कांड किष्किंध, B2 [m. also as in B4] कांडं कैष्किंध; B4 कांड कैष्किंध्य, D11.13 किष्किंधमिति) संज्ञित; B3 (m. also) किष्किंदिकमिति स्मृत (for the post. half). —(l. 122) Ś1 ऋषिमूक-, B1 °श्रृंग-, B4 °कूट-, D12 °मूषक- (hypermetric), D13 ऋषिमूकि- (for ऋष्यमूक-). V4 -गिरिं (for -गिरि-). —(l. 123) V4 °दाश् (for सवादश्). Ñ2 V1.3 B2.3 D5.7.10–12 [ए]व; V2 [अ]पि (for [अ]त्र). V4 B1 कथ्यते (for कीर्त्यते). —(l. 124) D12 चैव (hyper-

अत: काण्डं चतुर्थं तु कैष्किन्धिकमिति स्मृतम् ।
ऋष्यमूकगिरिप्राप्ती राघवस्य महात्मन: ।
हनुमद्दर्शनं चैव संवादश्चात्र कीर्त्यते ।
आरोहणं च शैलस्य ऋष्यमूकस्य कीर्तितम् ।
रामसुग्रीवसख्यं च वालिपौरुषकीर्तनम् ।
सप्ततालविभेदश्च प्रत्ययोत्पादनं तथा ।
वालिसुग्रीवयुद्धं च वालिनो वध एव च ।
अन्त:पुरविलापश्च ताराकारुण्यमेव च ।
सुग्रीवस्याभिषेकश्च करणं चाश्रमस्य च ।
विलापो राघवस्यात्र लक्ष्मणेन च सान्त्वनम् ।
प्रावृड्विलापश्चैवात्र शरद्वर्णनमेव च ।
विलापश्चैव शरदि समयस्य च लङ्घनम् ।
सुग्रीवं प्रति रामस्य कोपो यत्र प्रकीर्तित: ।
रामस्य कोपं विज्ञाय लक्ष्मणस्य च संभ्रम: ।
प्रशमो लक्ष्मणस्याथ दौत्येन गमनं तथा ।

सुग्रीवस्य तथा चात्र गमनं राघवाश्रमे ।
प्रसादनं च रामस्य वानराणां च संग्रह: ।
पृथिव्या वर्णनं चैव सुग्रीवेण महात्मना ।
प्रस्थापन वानराणामङ्गुलीयस्य चार्पणम् ।
हनुमत्प्रभृतीनां च विन्ध्यपर्वतलङ्घनम् ।
स्वयंप्रभागुहायाश्च प्रवेश इह कीर्तित: ।
अप्रवृत्तौ च वैदेह्या विषादगमनं महत् ।
प्रायोपवेशनं चात्र वानराणां महात्मनाम् ।
दर्शनं चात्र संपातेर्गृध्रराजस्य धीमत: ।
निवेदनं च लङ्काया गृध्रराजेन धीमता ।
चतुर्थमेतत्काण्डं तु कैष्किन्धमिति संज्ञितम् ।
सर्गाश्चैवात्र विज्ञेयाश्चतु:षष्टिस्तु संख्यया ।
श्लोकानां द्वे सहस्रे च अष्टौ श्लोकशतानि च ।
श्लोकानां च शतं ज्ञेयं पञ्चविंशतिरेव च ।
अत: परं प्रवक्ष्यामि काण्डं सुन्दरसंज्ञितम् ।

metric) (for च). Ś1 D13 ऋषि° (for ऋष्यमूकस्य). Ñ1 V1.3 D5 कीर्तन, V2 दर्शन (for कीर्तितम्) —Ñ1 damaged from कीर्तनम् in l. 125 up to 129.—D5 om. (hapl) l. 125.—(l. 125) Ś1 -सौख्य, V3 -सख्यश् (for -सख्य). V4 रामसुग्रीवयो सख्य (for the prior half).—After l 125, B3 ins :

प्रतिज्ञा राघवस्यापि वधे वालिन एव च ।

—(l. 126) Ñ2 B1.2 (m. also) सप्तशा(Ñ2 °सा)ल- (for सप्तताल-). Ñ2 B3 (m. as above) D10 -प्र° (for -विभेदश्). Ñ2 -[उ]त्पाकस (sic) (for -[उ]त्पादन).—Ñ2 reads l. 128 in marg.—(l. 128) D12 repeats पुर ditto. D7.10 -विलाप (for -विलापश्).—(l. 129) D5 [अ]भिषेक तु (for [अ]भिषेकश्च).—After the prior half, B2 ins.:

वालिपुत्रसमर्पणम् ।

यौवराज्य च तस्यात्र.

D11 कारण (for करण). D7 वा (for च). V3.4 B1.3 (m. also) वालिपुत्रसमर्पण (for the post. half).—(l. 130) D12 लक्ष्मणस्य (for लक्ष्मणेन) V4 om. च (submetric). V3 रावण (sic) (for सान्त्वनम्).—Ñ1 damaged from l 132–204.—(l. 132) D5 वि°; D7 च पालन (for च लङ्घनम्).—(l. 133) Ś1 च°, D7 [अ]व° (for प्रकीर्तित:). V2.4 B1.4 कोपोत्र परि(B1 प्रकोपो यत्र, B4 कोप एव प्र)कीर्तित:(V4 कीर्त्यते) (for the post. half).—(l. 134) Ñ2 B3 (m. as above) प्र° (for विज्ञाय). B4 रामकोप परिज्ञाय (for the prior half). D11 लक्ष्मणेन.—(l. 135) Ñ2 B1.3 D10 प्रेषणं; D13 शतमो (sic) (for प्रशमो) D11 दूत्येन, D12 चोत्येन (sic) (for दौत्येन). D7 हृत्येनागमन (sic) (for दौत्येन गमन).—(l 136) Ś1 D5.7.12 यथा (for तथा). V1 [अ]थ (for [अ]त्र). V1.4 D5.7.11.12 °श्रम; V2 त्वां वराश्रम (for राघवाश्रमे). V3 सुग्रीवस्याथ गमन राघवाश्रममेव च.—(l. 137) V2 सर्वश:, D13 सगम: (for सग्रह:).—After l. 137, B3 ins.:

सुग्रीवेण प्रतिज्ञा च सीतोद्धारणकर्मणि ।

—(l. 138) D13 वरण (for वर्णन). Ś1 सर्व (for चैव).—(l. 139) Ñ2 V2.4 B D10 प्रस्थानं वानराणा च (for the prior half) V3.4 B अगुर्ग° (for अङ्गुलीयस्य).—(l 140) D12 हनुमत्त (hypermetric) (for हनुमत्). B4 om च (submetric).—(l. 141) D12 स्वयप्रभाया (hypermetric) (for स्वयप्रभा-) V2 B4 -गुहाया (for -गुहायाश्). D7 प्रदेश (for प्रवेश). V2 D5 इति; B2.3 (m. also) D13 परि- (for इह). D11 कीर्त्यते (for कीर्तित). V1.4 प्रवेशश्च प्र(V4 °श्चेह) कीर्तित ) for the post. half).—(l. 142) B3 (m also) सीताया (for वैदेह्या). V2.4 -[आ]गमन (for -गमन). V2.4 B1 तथा (for महत्).—(l. 143) Ñ2 B1.3 D7.10 [ए]व (for [अ]त्र).—(l. 144) Ñ2 V4 B3 (m as above) D10 [ए]व (for [अ]त्र). सप्राप्तेर् (for संपातेर्). D11 धीमता (for धीमत:).—After l. 144, B3 ins.:

जटायुषश्च संवादो वानरै: परिकीर्तित: ।

—B1 D11 om. (D11 hapl.) l. 145.—(l. 145) D12 लकायां. D13 कीर्तित (for धीमता).—(l. 146) D12 सज्ञ (for काण्ड). D11 वै (for तु). Ś1 V1 B3 D5.7.10.12.13 कैष्कि (V1 °कि)ध्य(Ś1 °द, D12 °धि, D13 °ध)म्; V3 कैकिधिकम् (hypermetric), D11 किष्कि° (for कैष्किन्धम्) V4 कैष्किन्धिकमिति स्मृत (for the post. half). B1 काड चतुर्थमित्युक्तं किष्किन्धानामसंज्ञित.—(l. 147) V3 °णां चात्र (for सर्गाश्चैवात्र). B4 संख्येयाश् (for विज्ञेयाश्). B3 (m. also) सर्गाश्चैव परिज्ञेयाश् (for the prior half). Ñ2 B3 च (for तु). V2.4 D5.7.13 संज्ञया, D12 सज्ञियां (corrupt) (for सख्यया).—(l. 148) Note hiatus between the two halves Ñ2 V2 B3 D10 तु (for च). V3 च सहस्रे द्वे (by transp.); D7 च सहस्रेण.—Ñ2 reads (m.) l. 149 after l. 166.—(l. 150) V1 °मेव च; B4 सुदर स° (for सुन्दरसंज्ञितम्).—(l. 151) Ś1 -लंघन; D5 -प्रवण; D7 -प्लवगो (for -प्लवनं). Ñ2 V4 B2.3 D10.12.13 चैव; B1 अत्र (for यत्र). V1 हनुमत्प्रवषां चैव (for the prior half). B4 स्वर°; D13

हनुमत्प्लवनं यत्र सुरसायाश्च दर्शनम् ।
मैनाकस्य गिरेश्चैव दर्शनं परिकीर्तितम् ।
निधनं सिंहिकायाश्च लङ्कादर्शनमेव च ।
प्रवेशश्चैव लङ्काया वर्णनं विचयस्तथा ।
मार्गणं चैव वैदेह्या रावणान्तःपुरे शुभे ।
दर्शनं पुष्पकस्येह आपानस्य च वर्णनम् ।
दर्शनं राक्षसेन्द्रस्य रावणस्य दुरात्मनः ।
विचयः पुष्पकस्येह जानक्याश्चैव मार्गणम् ।
अदर्शने च वैदेह्याः शोकोपगमनं तथा ।
प्रविश्याशोकवनिकां वैदेह्याश्चैव दर्शनम् ।
प्रवेशो रावणस्येह रक्षसः प्रमदावने ।
प्रलोभनं च सीतायाः रावणस्य च भर्त्सनम् ।
गर्जितं राक्षसीनां च हनूमद्दर्शनं तथा ।
अभिज्ञानप्रदानं च सीतासंभाषणं तथा ।
चूडामणिप्रदानं च प्रतिसंदेश एव च ।
वनप्रभङ्गः क्रूराणां राक्षसानां च भर्त्सनम् ।
किंकराणां वधश्चात्र मन्त्रिपुत्रवधस्तथा ।
सेनापतिवधश्चात्र अक्षस्य च वधस्तथा ।
कीर्तितं द्वन्द्वयुद्धं च हनूमन्मेघनादयोः ।
ब्रह्मास्त्रेण च बन्धो वै मारुतेः परमाद्भुतः ।
निवेदनं च दूतस्य भर्त्सनं च हनूमतः ।
लाङ्गूलदीपनं चैव लङ्कादाहस्तथैव च ।
सीताया दर्शनं भूयः प्रत्यागमनमेव च ।
जाम्बवत्प्रमुखैश्चैव हरिभिः सह संगमः ।
तथा मधुवनप्राप्तिर्मधूनां च विलोपनम् ।
दर्शनं देवमार्गस्य भङ्गो मधुवनस्य च ।
अङ्गदप्रमुखानां च हरीणां रामदर्शनम् ।
हनूमतः परिष्वङ्गो राघवेण महात्मना ।
प्रवृत्तिश्चैव सीताया मणिदानं तथैव च ।
लङ्काया दर्शनं चैव दर्शनं रावणस्य च ।
सीताया दर्शनं चैव प्रतिसंदेश एव च ।
दुर्गकर्मविधानं च राक्षसानां विचेष्टितम् ।
अशोकवनिकाभङ्गो दुर्गस्य च विनाशनम् ।
यत्रैतत्कथयामास हनूमान्राघवाय वै
यत्र सुग्रीवसहितो राघवः सहलक्ष्मणः ।

---

सिंहकायाश् (for सुरसायाश्). —(l. 152) B4 °श्च (sic), D7 मेना° (for मैनाकस्य). V3 गिरे पार्श्व- (for गिरेश्चैव). D12 परिकीर्तित —(l. 153) D12.13 सिंहकायाश्. —D13 om. l. 154–156. —(l. 154) B2 प्रवेशन च (for प्रवेशश्चैव). V2.4 B1.2.4 लंकायां (for लङ्काया). V4 विविध; B1 (before corr. as above).3 (m. also) निच°; B4 D12 विजयस् (B4 °यन्); D10 चित° (sic) (for विचयस्). —B1 om. (hapl.) l. 156. —(l. 156) Note hiatus between the two halves. V3 पुष्कलस्य (for पुष्पकस्य). Ñ2 B2 आपणस्य, V1.2 विमानस्य (for आपानस्य). B3 (m. also) D11 दर्शन (for वर्णनम्) —(l. 157) D13 प्रवेशे (for दर्शनं). —(l. 158) V4 विजयः; D13 विषयः (for विचयः). V3 पुष्कलस्य; B4 D13 पुष्कर(D13 °क)स्य (for पुष्पकस्य). V1 पुष्पकस्येह विचय (for the prior half). D12 मार्गणा (for मार्गणम्). —(l. 159) V1 अदर्शन चैव (hypermetric), V2.3 B3 अदर्शनं च, V4 दर्शनं चैव, B2 °नेन, B3 (m. also) °ने तु (for अदर्शने च). B1 कोप- (for शोक-). V1 °शमनं (for -[उ]पगमन). —(l. 160) V3 [अ]पि (for [ए]व). —(l. 161) B3 वानरस्येह; D12 राक्षसेंद्रस्य (for रावणस्येह). Ś1 D5.7.12 रक्षसां, B1.3 D11 राक्षस. (sic) (for रक्षस). Ś1 प्रमद वन, V1.2.4 B2 D7.11–13 °वनं (for प्रमदावने). —(l. 162) V4 प्रबोधन (for प्रलोभनं). Ñ2 B3 (m. also) D10 वै(Ñ2 वे)देह्या (for सीताया). —(l. 163) Ś1 D5.7.11–13 तर्जन, Ñ2 V1 B2 D10 तर्जित; V4 गजितं (sic) (for गर्जित). D7.10.12 °सानां (for राक्षसीनां). —Ś1 D5.7 om. (hapl.) l. 164 —(l. 166) Ñ2 B3.4 -प्रभंग(B3 °ग), V2.4 B1 -भगश्च (for -प्रभङ्ग). B1 शूराणां (for क्रूराणां). Ś1 V1.3.4 B1–3 (B3 m. also) °सीनां (for राक्षसानां). Ś1 गर्जे°; V1 D5.7.11.12 तर्जे° (for भर्त्सनम्). —(l. 167) Ś1 किंकरीणां. V2.4 B1.2 [ए]व (for [अ]त्र). —(l. 168) Note hiatus between the two halves. V1.3 तु (for च). D13 तथैवाक्षवधोपि च (for the post. half). —(l. 169) Ś1 D5.12 दुर्ग°; D7 दुःख° (for द्वन्द्वयुद्ध). V2 B4 तु (for च). V1.3 हनुमन्मेघनादयोः (for the post half) —(l. 170) V4 om. च (submetric). D11 [ऽ]स्य (for वै). D7 वधश्चैव (for च बन्धो वै). V2 D13 मारुतो (for मारुतेः). V3 D5 °द्भुत (for परमाद्भुतः). —(l. 171) D11 दूत्यस्य (for दूतस्य). —After l. 171, V2.3 ins.:

रक्षोभिर्बन्धनञ्चापि ब्रह्मास्त्रस्य च मोक्षणम् ।

[V3 [अ]स्य (for [अ]पि). V2 वि° (for च मोक्षणम्).] —(l. 172) Ś1 -[उ]द्दीपन, Ñ2 V1 B2–4 D10 -[आ]दीपनं (for -दीपन). V4 लागलादीपन चैव (for the prior half). —(l. 173) Ś1 हर्षण (for दर्शन). V3 चैव (for भूय). D7 -[आ]गमन (for -[आ]गमनम्). —(l. 174) B3 जाबु°; D12 जाव° (for जाम्बवत्-). V1 D5 सगनं (for संगमः). D11 संगमस्तथा (for सह संगम). —After l. 174, B3 ins.:

प्रत्यागमो वानराणामङ्गदस्य महात्मनः ।

—(l. 175) D7 मधुवन. Ñ2 B1–3 (B3 m. as above) D13 विलुंठन; V1.4 D11 विले°; V2.3 D7.10 विलु° (for विलोपनम्). —(l. 176) D7 चैव मा° (for देवमार्गस्य). V2.4 B1.2 देवमार्गाभिरोहश्च (for the prior half). Ś1 संगो, D7 सूद्दो (sic) (for भङ्गो). D11 om. च (submetric). —(l. 177) D12 हि (for च). D11 कपीना (for हरीणां). —(l. 178) V4 हनूमता (for महात्मना). —(l. 179) D5 प्रवृत्ति (for प्रवृत्तिश्). B2–4 (B3 m. also) [अ]पि (for [ए]व). —Ś1 D7 om. (hapl.) l. 180–181. —(l. 180) V2 D11 राघवस्य (for रावणस्य). V4 रावणस्य च दर्शन (by transp.) (for the post. half). —(l. 181) V1 पति- (for प्रति-). —(l. 182) B2.4 राक्षसीनां. V3.4 B1.2 च चेष्टितं. —(l. 183) Ś1 V1 D5.7.12 -भंगं (for -भङ्गो). —(l. 184) D13 यदेतत् (for

महता हरिसैन्येन प्रययौ दक्षिणामुखः ।
सर्वे च सहिता यत्र निविष्टाः सागरं प्रति ।
इत्येतत्पञ्चमं काण्डं सुन्दरं परिकीर्तितम् ।
सर्गाणामत्र सख्या च काण्डे सुन्दरसंज्ञिते ।
चत्वारिंशत्त्रयश्चैव सर्गाः सम्यगुदाहृताः ।
श्लोकानां द्वे सहस्रे च चत्वारिंशच्च पञ्च च ।
अतः परं तु षष्ठं च युद्धकाण्डमिति स्मृतम् ।
यत्र रामो महाबाहुः सागरं समुपस्थितः ।
यत्र लङ्कां जिगमिषुर्मन्त्रयामास राघवः ।
प्राप्तं च राघवं श्रुत्वा मन्त्रयामास रावणः ।
शमार्थी यत्र रामेण ज्येष्ठमाह विभीषणः ।
मुच्यतां मैथिली राजन्स्वस्त्यस्तु नगरस्य नः ।
एतद्धि परमं श्रेयो विपरीतेऽनयो भवेत् ।
एवमुक्तो दशग्रीवः क्रोधसंरक्तलोचनः ।
जघान यत्र पादेन भ्रातरं वै विभीषणम् ।
रावणं च परित्यज्य चतुर्भिः सचिवैः सह ।
आगच्छद्राघवाभ्याशं गदापाणिर्विभीषणः ।
अभिषिक्तश्च रामेण लङ्काराज्ये विभीषणः ।
सागरात्तोयमादाय प्रयत्नेन महात्मना ।
यत्र रामस्य संरम्भः समुद्रस्य च दर्शनम् ।
नलसेतुक्रिया चैव सागरानुमते तथा ।
तरणं चैव घोरस्य सागरस्य महात्मनः ।
सुवेलासादनं चैव चारप्रणिधिरेव च ।
शुकसारणवाक्यं च वानरानीकदर्शनम् ।
मन्त्रणं राक्षसेन्द्रस्य मायारामशिरःक्रिया ।
वाक्यानि सरमायाश्च सीताश्वासनमेव च ।
यत्र माल्यवतो वाक्यं लङ्काया गुप्तिरेव च ।
मन्त्रणं राघवबले चाराणां च प्रवेशनम् ।
सुवेलारोहणं चैव तथा लङ्कावरोधनम् ।
समारम्भश्च युद्धस्य द्वन्द्वयुद्धप्रवर्तनम् ।

यत्रैतत्). V4 राघवस्य (for राघवाय). V4 D11 च (for वै). —(l. 185) D7 सलक्ष्मणः (submetric) (for सहलक्ष्मण॰). —(l. 186) V3 हरिसैन्येन सहितो (for the prior half). V1 प्रजयौ (sic) (for प्रययौ). —(l. 187) V2 B3 (m also) ते (for च). D13 तत्र (for यत्र). —(l. 188) Ś1 transp. पचम and सुंदर. V4 B1 नाम की°, B3 °कीर्तनम् (for परिकीर्तितम्). —(l. 189) V2 B1 यत्र, V3 B4 चात्र (for अत्र). Ś1 V2 -संज्ञके (for -सज्ञिते). —(l. 190) V3 त्रय (for त्रयश्). Ś1 Ñ1 V1.3 D5.7.12 च समुदा° (for सम्यगुदाहृता). —(l. 191) V3 तु (for first च). V4 पचम; D13 पंचम (for पञ्च च). —(l. 192) V1 om (submetric), B हि; D10.13 च (for तु). Ñ2 V2 B D10 तु, V4 हि, D14 वै (for च) D10 transp. तु and च. B1 लका° (for युद्धकाण्डम्). D11 इत (for इति). —(l. 193) B4 अत्र (for यत्र). —(l. 194) Ś1 V1.4 B1 D7.12 लका- (for लङ्का). —(l. 195) D13 रावण (sic) (for राघव). D12 श्रुत (sic) (for श्रुत्वा). —(l. 196) V3.4 D12 सामार्थी; B1 धर्मार्थी; D5 समर्थो; D13 शमार्थे (for शमार्थी). V2 रामार्थाय तु (sic) (for शमार्थी यत्र). V4 राज्यस्य (for रामेण). V4 मंत्रम् (for ज्येष्ठम्). D5 ज्येष्ठो यत्र विभीषण (for the post. half). —(l. 197) V3.4 B2 D5 मैथिली, D13 जानकी (for मैथिली). B1 सीता (for राजन्). V4 स्वजनस्य (for नगरस्य). V3 B1.3 (m. also) D10 च (for न॰) —(l. 198) B3 D5 परम- (for परम). V1.3 श्रेष्ठ (V3 °ष्ठो) (for श्रेयो). Ñ2 V2–4 B1.2 D5.7.12 विपरीतो (for विपरीते). —(l. 199) B1 कोप- (for क्रोध-). —(l. 200) D12 यथान (sic) (for जघान). D5 वामेन (for पादेन). Ñ2 V2 B1–3 (m. also) D7 च (for वै). D12 °षिण (for विभीषणम्). —D12 om. l. 201–202. —(l. 201) Ś1 तु, B2 स; D13 स- (for च). —(l. 202) V1 अभ्यगच्छद् (hypermetric); V3.4 B1.4 D7 अगच्छद् (for आगच्छद्). Ś1 -[अ]भ्याशे, V2.4 -[आ]वासं (for -[अ]भ्याशं). —After l. 202, B3 ins.:

पतित्वा रामपादे च शरणं गतवान्भयात् ।

—Ś1 D5.7 om. (hapl.); Ñ1 missing (fol. injured) l. 203. —(l. 204) D7 राम रात्रायमाजग्मुः (sic) (for the prior half). Ñ2 B D10.13 प्रयत्नेन; D7 प्रया° (for प्रयत्नेन). —(l. 205) D7 om. च (submetric). —(l. 206) V2 नग- (for नल-) Ñ1 V1 D11–13 -क्रियाश्च (V1 D12 °यां) (for -क्रिया). —(l. 207) B3 (m. also) रामस्य (for घोरस्य). V2.4 समुद्रस्य (for सागरस्य). D12 °त्मना, D13 °त्मन (for महात्मनः). —B1 om. (hapl.) l. 208–213. —(l. 208) V4 -[आ]रोहण (for -[आ]सादन). V2 चारु- (for चार-). V4 B4 -प्रनिनिधिर् (hypermetric) (for -प्रणिधिर्). —(l. 209) V3 -वाक्येन (for -वाक्य च). V4 D10.12 वानराणां च (D12 °णांक-) (for वानरानीक-). —(l. 210) D5 मंत्रिण, D7 मन्त्राणां; D12 मंत्रणे (for मन्त्रणं). D5 राघवे° (for राक्षसेन्द्रस्य). Ñ2 V3 B3.4 D10 तथा (for -क्रिया). —(l. 211) D11 °नदनम् (for सीताश्वासनम्). D12 om. सनमेव च. —(l. 212) D11 °वता (for माल्यवतो). V4 D7 लंकायां (for लङ्काया). Ś1 D5.13 गुप्ति; Ñ गुप्त; D12 गुप्तं (for गुप्तिर्). —(l. 213) Ś1 मन्त्रिण; B4 मंत्रणा (for मन्त्रणं). Ñ1 राघव..., Ñ2 °बले, V2 राक्षसानां च; V4 रावणेद्रस्य (for राघवबले). Ñ V1.3 B2–4 D5.12 चरा (D5.12 चार)णां; V4 वानराणा (hypermetric) (for चाराणां). Ñ1 नि° (for प्रवेशनम्). —B1 (*sec. m.*) reads from l 214 up to the prior half of l. 220 in marg. —(l. 214) Ñ1 ततो; V4 यत्र (for तथा). —Ś1 D5.7 om. l. 215. —(l. 215) V4 °स्तु, D11 यत्रा°, D12 °स्य; D13 आरभश्चैव (for समारम्भश्च). B4 तथा द्वद्व- (for द्वन्द्वयुद्ध-). —D13 om. l. 216. —(l. 216) V2 स्वल्पप्र-; B1 सप्रह्न- (for सुप्रह्न-). D12 om. यज्ञ. Ś1 [आ]शु मन्त्रित॰, Ñ2 [अ]...शब्दित; B2 वि(m. also [अ]नु)द्याक्रितः; B3(m. also as above).4 D11 विशब्दित (for [अ]-नुशब्दित॰) —(l. 217) V4 °दुर्ग- (for रात्रियुद्ध-) Ś1 -विमान (for -विधान). D13 सर्प° (for शरबन्धस्). —(l. 218) Note hiatus between the two halves. D11 सुपर्ण (for सुपर्ण-). B4 -बंधन- (for -बधस्य). V4 मोक्षात् (submetric) (for मोक्षणम्). B2 अस्त्रबंधविमोक्षण (for the post. half). —(l. 219) V2 [अ]पि (for [ए]व). —After l. 220, B3 ins.:

सुमन्त्रयज्ञकोपादिवधो यत्रानुशब्दितः ।
रात्रियुद्धविधानं च शरबन्धस्तथैव च ।
सुपर्णदर्शनं चैव अस्त्रबन्धस्य मोक्षणम् ।
धूम्राक्षस्य वधश्चैव तथैवाकम्पनस्य च ।
प्रहस्तस्य वधश्चैव प्रभङ्गो रावणस्य च ।
दुर्गकर्मविधानं च कुम्भकर्णप्रबोधनम् ।
दर्शनं कुम्भकर्णस्य संप्रश्नो राघवस्य च ।
निर्याणं कुम्भकर्णस्य वानराणां च संभ्रमः ।
सुग्रीवग्रहणं चैव प्रमोक्षश्चात्र कीर्त्यते ।
वधश्च कुम्भकर्णस्य राघवात्समुदाहृतः ।
नरान्तकवधश्चात्र देवान्तकवधस्तथा ।
महोदरवधश्चैव वधस्त्रिशिरसस्तथा ।
महापार्श्ववधश्चात्र अतिकायवधस्तथा ।
मेघनादास्त्रमोहश्च ससैन्ये राघवे तथा ।
ओषध्यानयनाच्चापि प्रबोधश्च हनूमता ।
उल्काभिहारयुद्धं च वधः कुम्भनिकुम्भयोः ।
मकराक्षवधश्चात्र निर्गमो रावणेः पुनः ।
मायासीतावधश्चात्र मेघनादवधस्तथा ।
क्रोधश्च राक्षसेन्द्रस्य तथा निष्ठानकं महत् ।
रावणस्य च निर्याणं विरूपाक्षवधस्तथा ।
मत्तस्यापि वधश्चात्र उन्मत्तवध एव च ।
राघवस्य च वाक्यानि भर्त्सनं रावणस्य च ।
रामरावणयोश्चैव अस्त्रयुद्धं महात्मनोः ।
लक्ष्मणस्य वधश्चैव विलापो राघवस्य च ।
ओषध्यानयनं चैव लक्ष्मणोत्थानमेव च ।
प्रदानं देवराजेन रथस्य च महात्मना ।
मातलेर्दर्शनं चैव शक्रवाक्यनिवेदनम् ।
संग्रामे राक्षसेन्द्रस्य प्रभङ्गो रावणस्य च ।
सारथेर्भर्त्सनं चैव रावणेन दुरात्मना ।
देवानां विग्रहश्चैव गगने दानवैः सह ।

छेदन मुकुटस्यापि राक्षसाना पराभव· ।

—Ś1 om. (hapl.) l. 221–222 —(l. 221) V1 दुर्गस्य कर्म- (hypermetric), D11 दुर्ग° (for दुर्गकर्म-). —B3 reads l. 222–224 in marg. —(l. 222) V2–4 B2 D5 रावणस्य (for राघवस्य). —(l. 223) B3 निशानां (sic), D12 निर्यंन (sic) (for निर्याण). Ś1 om. (hapl.) the post. half of l. 223 up to the prior half of l. 225. —(l. 224) B3 -ग्रहणश्चात्र (for -ग्रहणं चैव). B1 कथ्यते; B2 कीर्तिन (for कीर्त्यते). —(l. 225) V3 त चैव (for राघवात्). —(l. 226) V3 D13 [ए]व (for [अ]त्र). B4 D11 वेदांतक- (for देवान्तक-). —Ś1 B3 D7 om. (hapl.) l. 227. —(l. 227) V4 त्रिनर (before corr. as above) एव च. —(l. 228) Note hiatus between the two halves. B3 °पार्थ-; G1 °यश्च (sic) (for महापार्श्व-) —For l. 226–228, Ñ1 B1 subst.

वधस्त्रिशिरसश्चैव देवान्तकवधस्तथा ।
नरान्तकनिपातश्च अतिकायवधस्तथा ।
निकुम्भकुम्भयोश्चैव वधो राक्षसपुत्रयो· ।

—Ñ1 om. l. 229–230 —(l. 229) V4 B2 D13 -मोक्षश् (for -मोहश्). B1 मेघनादस्यास्त्रमोक्ष· (for the prior half). D11 राघवस् (sic) (for राघवे). —(l. 230) Ñ2 B2 (m. also)–4 D10.11 -[आ]नयनं चापि, V3 -[आ]नयनार्थायि, D7 °च्चैव (for -[आ]नयनाच्चापि). D12 प्रबोधस्व (sic), D13 सप्रबोधो (for प्रबोधश्च). Ś1 V3.4 B4 D10 हनूमत (for हनूमता). —(l. 231) Ś1 उक्त मिहार-; V1 °मिहार-; V2 D12 °मिर्हरि-; V3 °मिवाद्य, V4 B2 (m. also) °विहार-; D5 उक्त्वा सं°; D7 उक्त स°, D11 °नीतार- (sic); D13 °नीहार- (for उल्काभिहार-). Ñ1 -युद्धश् (for -युद्ध). Ñ2 B3.4 D10 उल्काभि (D10 °सि) हरण चैव (for the prior half). —(l. 232) V3 B4 D13 [ए]व (for [अ]त्र). V1 ins. यज्ञं च before निर्गमो. Ñ2 om. from the post. half of l. 232 up to the prior half of l. 233. V4 निकुभो (for निर्गमो). D13 रावणस्य च (for रावणेः पुनः). —(l. 233) Ñ1 V2 B1.4 [ए]व (for [अ]त्र). —Ś1 om. (hapl.) l. 234–235. —(l. 234) D13 °श्च (for राक्षसेन्द्रस्य). Ñ1 यथा (for तथा) Ñ1 [अ]धिष्ठानक, V1 निदनकं, B3 (m. also) [अ]रिष्टादिक (for निष्ठानक). D5 तथा निष्टानकर्महत् (for the post. half). —(l. 235) Ñ1 V4 B1.2.4 वि° (for च निर्याण). D12 चित्रपधस्तथा (sic) (for the prior half). —After l. 235, V3 B2 ins, B1 ins after l. 236:

महोदरमहापार्श्ववधश्चैव प्रकीर्तित ।
[B1 °वधश्चैव महापार्श्वस्य कीर्नित· ]

—(l. 236) Note hiatus between the two halves. B1 च (for [अ]पि). —(l. 237) B2 (after corr. as above) रावणस्य (for राघवस्य). D11.12 om. first च (submetric). —After l. 237, B4 ins., while D13 after l. 240:

मदोदर्या तथा केशग्रहण चाङ्गदेन च.
[D13 केशाकर्षण (for केशग्रहण).]

—Ś1 om. (hapl.) l. 238–239. —(l. 238) Note hiatus between the two halves. Ñ2 B2.3 D10.13 शस्त्र°, V4 अस्त्रमूर्ध्वं (for अस्त्रयुद्ध). —After l. 238, B4 ins.:

तथा शक्तिपरित्यागो रावणेन दुरात्मना ।

—(l. 239) V3 वधो यत्र (for वधश्चैव). —(l. 240) D5.7.10 औषधि-. —(l. 241) D7 वनस्थस्य (for रथस्य च). Ś1 Ñ1 V3.4 °त्मनः (for महात्मना). —(l. 242) D12 om. (hapl.) from the post. half up to the prior half of l. 244. Ñ1 B1.4 शत्रु° (for शक्रवाक्य-). —(l. 243) D13 संग्रामं (for संग्रामे). Ś1 राघवेंद्रस्य V2 om. (hapl.) from the post. half up to the prior half of l. 247 B3 प्रभग्ना (for प्रभङ्गो). —(l. 245) V1 विग्रहं चैव; D5 विग्रहस्यैव (for विग्रहश्चैव). —(l. 246) V1 द्वैरथं चैव; V4 °थ तु, D12 द्वै° (for द्वैरथ च). Ś1 V1.2 B3 (m. also) D5.7.11.12 क्षिति-; Ñ2 D10 भूत-; V4 भुवि (for भूमि-). Ś1 -कद° (for -कम्पनम्). —(l. 247) V2 विश्रुतिः; V3 D5 विश्रुत (for विश्रुत·). —(l. 248) D10 कांडे (for काण्डं). V2 B1 लंका° (for युद्धकाण्डम्). Ñ V1 B1–3 D7 श्रुतं; D5 श्रुतिः (for स्मृतम्). —(l. 249) V1 D5.7.11.12 तु

